गगने गमनाकारं पक्षविक्षेपसंयुतम्।
तत्सर्वं रुक्मवर्णेन अन्यद्वर्णं न कारयेत्।।

सर्वावयवसंपूर्णं द्विभुजं प्राञ्जलीकृतम्।
मकुटाभरणसंयुक्तं सर्वाभरणभूषितम्।।

कुञ्चितं वामपादञ्च पृष्ठभागोर्ध्वतान्यकम्।
किञ्चिदायतवृत्ताक्षं नीलवर्णाग्रनासिकम्।।

किङ्किणीजालसंयुक्तं बाहुबन्धाङ्गुळीयकम्।
पुष्पमालापरिवृतं नानापुष्पाद्यलंकृतम्।।

पार्श्वद्वये च कुम्भौ च दीपान् तत्रैव कारयेत्।
पादपार्श्वे तु संलेख्य पालिकांश्चाङ्कुरैः तथा।।

उपरि छत्रेण संयुक्तं पञ्चायुधसमन्वितम्।
अष्टमङ्गळसंयुक्तं धूपदीपादि पात्रकम्।।

चामरग्राहिणीभ्याञ्च पटोपरि सुलेखयेत्।
चन्द्रं सूर्यं तथालेख्यं मुनिचिह्नानि लेखयेत्।।

सनकं च सनत्कुमारं लेखयित्वा विचक्षणः।
भूषणैरष्टनागैश्च वामहस्ते त्वनन्तकम्।।

वासुकिं यज्ञसूत्रञ्च तक्षकं कटिसूत्रकम्।
हारं कर्कोटकं ज्ञेयं पद्मं दक्षिणकर्णके।।

वामकर्णे महापद्मं शङ्खन्तु शिरसि न्यसेत्।
गुळिकं दक्षिणे हस्ते क्रमात्सर्वविभूषितम्।।

एवं संलेख्य मतिमान् शिल्पशास्त्रविशारदः।
अन्यवर्णेन संलेख्य यथालाभं तथा भवेत्।।

अन्यत्पटं तु सर्वत्र कृष्णवर्णेन पूरयेत्।

**प्र.२४.५२ - ६४**

तन्मध्ये तु लिखेद्वीशं पञ्चवर्णैरलङ्कृतम्।।

ध्रुवबेरस्य कण्ठान्तमुत्तमे चोत्तमं भवेत्।
अधमान्त्यं तु नाभ्यन्तं तयोर्मध्येऽष्टधा भवेत्।।

एकैकमधमान्तं च नवधा मानमुच्यते।
ध्वजदण्डस्य वीशस्य षट्शुभानि निरीक्षयेत्।।

यजमानानुकूले च नक्षत्रे च विशेषतः।
नवार्धतालमानं वा नवतालमथापि वा।।

अतिभङ्गं नतं चैव भङ्गत्रयसमन्वितम्।
वामपादं समाकुञ्च्य दक्षिणं सम्प्रसार्य च।।

किञ्चित्सङ्कुचितं पीठात् पार्ष्णिपार्श्वं समुद्धृतम्।
पक्षद्वयसमायुक्तं करण्डमुकुटान्वितम्।।

श्यामं श्वेतं तथा कृष्णं रक्तं पीतं तथैव तु।
एतैस्तु पञ्चभिर्वर्णैः अनुरूपैस्तु शोभनैः।।

गरुडं प्राञ्जलिं कुर्यात् किञ्चित्कं प्रेक्षयेद्बुधः।
भूषणैरष्टनागैश्च वामहस्ते त्वनन्तकः।।

वासुकिर्यज्ञसूत्रं तु कटिसूत्रं तु तक्षकम्।
हारं कर्कोटकं चैव पद्मं दक्षिणकर्णके।।

महापद्मं वामकर्णे शङ्खं च शिरसि क्रमात्।
गुलिकं दक्षिणे हस्ते क्रमात्सर्वविभूषणम्।।

मूर्ध्नश्चोपरि कर्तव्यं श्वेतच्छत्रं तु सुन्दरम्।
पार्श्वयोरुभयोश्चापि चामरद्वयसंयुतम्।।

पादपार्श्वद्वये चैव दीपद्वयसमन्वितम्।
पूर्णकुम्भं तयोर्मध्ये लिखित्वा तु विशेषतः।।

तस्याधश्शङ्खचक्रे च समालिख्य विशेषतः।
मुक्तादामाद्यलङ्कृत्य पार्श्वयोः कदलीकृतम्।।

## ७.३.६ ध्वजपटस्थस्य गरुडस्याभूषणानां नागानां वर्णा

**वा.३२**

अनन्तो गुलवर्णः स्यात् वासुकिं गुलपीतकम्।
तक्षको रक्तवर्णस्स्यात् कार्कोटं मेघसन्निभम्।।

पद्मं पद्मनिभं कुर्यात् महापद्मं प्रवालभाक्।
शङ्खं शङ्खनिभं कुर्यात् कृष्णं गुलिकमेव च।।

एतद्वर्णसमायुक्तं यथायुक्त्यैव कारयेत्।

## ७.३.७ ध्वजपटस्थगरुडस्य स्थितिः

**अ.२९**

स्थानके स्थानकं कुर्यात् शयने स्थानकं भवेत्।

### ७.३.८ ध्वजे गरुडप्रतिष्ठा

**वि.५१.३४१, ३४२**

आलयाभिमुखे मण्टपं प्रपां वा वितानध्वजाद्यैरलङ्कृत्य, प्राच्यां ध्वजपट-विस्ताराधिकाऽऽयामं तस्यार्धविस्तारं, ध्वजस्य पश्चिमे चतुर्विंशत्यङ्गुलायामं, चक्रस्योत्तरे तथैव विष्वक्सेनस्य धान्यैस्त्रिवेदिसहितं पीठं कृत्वा, वायव्यामैशान्यां वा कुण्डमौपासनं कृत्वा, आघारं हुत्वा, अग्नेः पश्चिमायां धान्यपीठे प्राङ्मुखं ध्वजं संस्थाप्य, वास्तुहोमं हुत्वा, पर्यग्निपञ्चगव्याभ्यां संशोध्य, 'ददभ्यः स्वाहे'त्यादि गारुडं ध्वाजं वैष्णवञ्च हुत्वा, तत्तन्मन्त्रेणाक्षिमोचनं कृत्वा, गवादि दर्शनद्रव्याणि दर्शयित्वा, 'आपोहिष्ठा मयोभुवा'दिनाऽभ्युक्ष्य, पश्चाच्चतुराढकसम्पूर्णं कालविहीनं कुम्भं तन्तुना परिवेष्ट्य, प्रक्षाल्य, अद्भिरापूर्य, वस्त्रयुग्मेनावेष्ट्य, 'इदमापः शिवा' इत्यभिमृश्य, अक्षतान् स्वर्णं कूर्चं च विक्षिप्य, गरुडस्याभिमुखे धान्यपीठे सन्यस्य, गरुडं ध्यायन् कुम्भेऽम्भसि समावाह्य कुम्भं गरुडं च तथा स्नानायाऽभ्युक्ष्य, तथैव प्रतिसरं बध्वा, धान्योपरि पञ्चवस्त्राण्यास्तीर्य, शयनं सङ्कल्प्य, अग्निं प्रज्वाल्य, हौत्रं प्रशंस्य, ध्वाजं गारुडं वैष्णवञ्च हुत्वा, तद्बीजाक्षरं, तस्य हृदये न्यस्य, कुम्भस्थां शक्तिं कूर्चेनादाय, गरुडं ध्यायन् मूर्तिमन्त्रैरावाह्य, आनम्य, तन्मण्टपे कृते धान्यपीठे ध्वजं पश्चिमाभिमुखं प्रस्थाप्य, पश्चिमे प्राङ्मुखं चक्रं, उत्तरे दक्षिणामुखं शान्तञ्च संस्थाप्य, गरुडं गरुडगायत्र्या, शान्तचक्रौ तत्तन्मन्त्रेण आसनाद्यैरे-कादशोपचारैरष्टोपचारैर्वाऽभ्यर्च्य, मुद्गान्नं गरुडस्य, अन्ययोः शुद्धान्नं निवेद्य, पानीयाचमनमुखवासं दत्वा पुण्याहं वाचयित्वा

**य.३८.३९ - ५३ ; ज्ञा.११.१७४ ; क्रि.१४. २०**

**स.५४. ३८ - ४५**

एवमेतानि कृत्वा वै पश्चात्कर्म समाचरेत्।

यजमानस्तदाचार्यं वस्त्राद्याभरणैरपि।।

पूजयेद्वाहकौ चैव चक्रस्यापि ध्वजस्य च।
देवस्याभिमुखे सम्यङ् मण्टपे चोपलिप्य च।।

चतुर्दिक्षु चतुर्हस्तं पञ्चहस्तमथापि वा।
पञ्चवर्णैरलङ्कृत्य तस्मिन् प्राच्यां ध्वजस्य वै।।

द्वितालविस्तृतायामं तालोत्सेधं त्रिवेदिकम्।
धान्यैः पीठं प्रकल्प्यैव तथा चक्रस्य पश्चिमे।।

विष्वक्सेनस्योत्तरे वै पीठं सम्यक् प्रकल्पयेत्।
तत्तत्पीठे ध्वजादींश्च संन्यस्यैव यथाक्रमम्।।

वास्तुशुद्धिं तथाकुर्याद् ध्वजस्यात्र यथोचितम्।
कुम्भतोयैः प्रतिष्ठोक्तैः शुद्ध्यर्थं प्रोक्षयेद्ध्वजम्।।

ध्वजं संप्रोक्ष्य चावाह्य ध्वजे गरुडमर्चयेत्।
चक्रं च विष्वक्सेनं च विधिनैव समर्चयेत्।।

मुद्गान्नं गरुडस्यापि शुद्धान्नं हविरन्ययोः।
निवेदयित्वा सर्वेषां मुखवासं ददेत्क्रमात्।।

**प्र.२४.६५ - ८८**

पूर्वस्मिन्नेव दिवसे कृत्वा नयनमोक्षणम्।
देवालयस्याभिमुखे प्रपायां मण्डपेऽथवा।।

पञ्चवर्णैरलङ्कृत्य वितानस्तम्भवेष्टनैः।
शालिराशिं च कृत्वैव तत्पटं तु सुसन्न्यसेत्।।

वास्तुहोमं ततः कृत्वा पर्यग्निकरणं चरेत्।
पुण्याहं वाचयित्वैव प्रोक्षयेत्पञ्चगव्यकैः।।

ऐशान्यामग्निकुण्डे तु चौपासनविधानतः।
आघारं विधिवद्धुत्वा वैष्णवं च सुहूयते।।

हेमपात्रस्थवर्णेन हेमतूल्या विशेषतः।
तन्मन्त्रं च समुच्चार्य नयनोन्मीलनं चरेत्।।

अङ्गहोमं ततः कृत्वा दर्शनीयैश्च दर्शयेत्।
विष्णुसूक्तं च हुत्वा तु तथा पुरुषसूक्तकैः।।

व्याहृत्यन्तं च हुत्वा तु ततः कुम्भं प्रगृह्य च।
तन्तुना परिवेष्ट्यैव कूर्चयुक्तं सहाक्षतम्।।

वदन्वै विष्णुगायत्रीं गायत्रीं गरुडस्य च।
'इषे त्वोर्जेत्वा'दि जपन् 'आप उन्दन्त्वि'ति क्रमात्।।

ततः पुरुषसूक्तं च मन्त्रानपि च वैष्णवान्।
कूर्चेनैव तु तत्तोयम् अभिमृश्य समाहितः।।

तदम्बुना कुशाग्रेण प्रोक्षणैः प्रोक्षणं चरेत्।
आपो हिरण्यवर्णाभिः पवमानादिभिस्त्रिभिः।।

'शन्नो देवीरभी'त्युक्त्वा पुरुषसूक्तेन वैष्णवैः।
शुध्यर्थं प्रोक्षयित्वा तु पुण्याहमपि वाचयेत्।।

परिषिच्य पावकं पश्चात् तन्मन्त्रेण सुहूयताम्।
सायमर्चावसाने तु कुम्भपूजां समाचरेत्।।

कलशैः सप्तभिः प्रोक्ष्य बध्वा प्रतिसरं ततः।
अण्डजादीनि पञ्चैव धान्यान्यास्त्रीर्य वस्त्रयुक्।।

शयने शाययेच्चैव देवपादे शिरस्तथा।
हौत्रं प्रशंस्य तत्काले होता हौत्रक्रमेण वै।।

वैनतेयस्य मन्त्रेण तन्मूर्त्यावाहनं चरेत्।
मूर्त्तिमन्त्रैस्समावाह्य निरूप्याज्याहुतीर्यजेत्।।

'शतधारं कदा'पीति वीशमन्त्रमुदाहृतम्।
तथा द्वादशपर्यायं वैष्णवं च सुहूयताम्।

व्याहृत्यन्तं च कृत्वा तु रात्रिशेषं व्यपोह्य च।
आग्नेय्यां न्यस्य भेर्यां च नन्दिकेश्वरमाह्वयेत्।।

पुनः प्रभाते धर्मात्मा स्नात्वा स्नानविधानतः।
मुहूर्ते समनुप्राप्ते हृदि बीजाक्षरं न्यसेत्।।

कुम्भाच्छक्तिं समावाह्य चाऽर्चयित्वा विधानतः।
पुण्याहं वाचयित्वैव समभ्यर्च्य निवेदयेत्।।

अग्निं प्रज्वाल्य तन्मन्त्रैर्जुहुयाद्दशशः क्रमात्।
अन्तहोमं ततः कृत्वा विस्तारं चैकभागकं।।

उपलिप्य पटं पश्चात्पञ्चवर्णैरलङ्कृतम्।
धूपदीपैरलंकृत्य शालिपीठं प्रकल्पयेत्।।

चतुरश्रं समं कृत्वा विस्तारं चैकभागकं।
शाल्यर्धं तण्डुलं प्रोक्तं तदर्धं तिलमाहरेत्।।

चक्रं पश्चिमतो न्यस्य धान्यपीठोपरि स्थितम्।
तस्यैवोत्तरतः पार्श्वे विष्वक्सेनं तथैव च।।

धान्यपीठे सुसंस्थाप्य गरुडं पश्चिमामुखम्।

**वा.३२**

प्रमुखे शङ्खपुष्ठे वा आस्थानाग्रे प्रकल्पयेत्।
शयने पादपार्श्वे वा प्रासादस्यापरेऽपि वा।।

ततो विहङ्गं संस्थाप्य कारयित्वा विचक्षणः।
सङ्कटे स्थानके यत्र एतेष्वेकत्र कारयेत्।।

मन्दिरात्पुरतो वाथ प्रमुखे दक्षिणेऽथ वा।
यथाविभवविस्तारं प्रपां कृत्वा विचक्षणः।

वेदिं कृत्वा तु तन्मध्ये पूर्वोक्तेन विधानतः।
कुण्डमौपासनं कृत्वा तत्प्राच्यां कारयेत्क्रमात्।।

तथैवोत्तरपार्श्वे वा वास्तुहोमं सुहूयताम्।
पर्यग्निपञ्चगव्याभ्यां समभ्युक्ष्य प्रयत्नतः।।

ऊर्ध्ववेद्यां तु तन्मध्ये धान्यराश्युपरि न्यसेत्।
दक्षिणे चक्रं च संस्थाप्य अमितं चेति चोत्तरे।।

आघारं विधिवत्कृत्वा कुण्डमौपासनं क्रमात्।
तूलिकाद्वर्णमादाय शिल्पिना चाक्षिमोचनम्।।

तत्पटं प्रोक्षयेद्विद्वान् तथैवादाय चादरम्।
अक्षिणोन्मीलनं कुर्यात् ध्वजं गारुडमुच्चरन्।।

गवाद्यादीनि सन्दर्श्य प्रतिद्रव्यं समन्त्रकम्।
अथादर्शं च कूर्चं वा प्राङ्मुखे तत्र निक्षिपेत्।।

सप्तभिः कलशैः स्नानं पूर्वोक्तेनैव कारयेत्।
प्रतिसरं पूर्ववद्बध्वा कुम्भपूजां समाचरेत्।।

ध्यानमाविश्य तत्काले आत्मसूक्तं जपेद्बुधः।
यथालेख्यं तथा ध्यायेत् कुम्भाम्भसि समाहितः।।

तत्पटं चाधिवास्यैव चार्चयित्वाष्टविग्रहैः।
प्रच्छाद्यैनं नवैर्वस्त्रैः वाद्यगेयादि घोषयेत्।।

छन्दांस्यध्ययनं कुर्यात् प्रागादिषु यथाक्रमम्।
पश्चादग्निं परिस्तीर्य हौत्रं चैव सुहूयताम्।।

पूर्वोक्तेन क्रमेणैव हौत्रमन्त्रं प्रशंसति।
अग्रे सप्तदशैर्हुत्वा अन्यत् सर्वं समापयेत्।।

जुष्टाकारं ततः कुर्यात् पूर्वोक्तेन विधानतः।
विहङ्गं गरुडं चैव पक्षिराजं खगाधिपम्।।

एवं मूर्तिभिरावाह्य ध्यात्वा वैदेशिकोत्तमः।
विष्णुसूक्तं ततो हुत्वा हुत्वा तत्र च वैष्णवम्।।

ध्वजगरुडमन्त्रौ च हुत्वा तत्र समाहितः।
प्रत्येकं च ततो हुत्वा अष्टोत्तरशतं जपेत्।।

हुत्वा सकृत्प्रयोगेन कारयित्वा समाहितः।
सर्वदेवार्चनं तत्र रात्रिशेषं नयेत्क्रमात्।।

प्रभाते चैव शुद्धात्मा स्नानपूजादिकं चरेत्।
सद्मप्रदक्षिणं कृत्वा देवदेवं प्रणम्य च।।

पादप्रक्षालनादीनि पटशुद्धिं च कारयेत्।
पटमुद्धृत्य तत्काले प्रणम्यैवानुमान्य च।।

उक्तप्रकारं चालोड्य न्यसेद्बीजाक्षरादिकम्।
कुम्भात् शक्तिं समादाय कूर्चेनैवाह्वयेत्क्रमात्।।

गरुडसूक्तं जत्वा तु विधिना पूजयेद्द्विजः।
मुद्गान्नं च निवेद्यैव पानीयाचमनं ददेत्।।

ताम्बूलमुखवासादीन्, दत्त्वा देवं प्रणम्य च।
गरुडं च समभ्यर्च्य मुद्गान्नं च निवेदयेत्।।

**खि.३२.२०, २८ - ३४, ८६, ८८**

प्रतिष्ठोक्तविधानेन प्रतिष्ठां कारयेत्क्रमात्।।

-------------------------------------------- ।

देवालयस्याभिमुखे मण्डपं चोपलेपयेत्।।

चतुर्दिशं चतुर्हस्तं पञ्चहस्तमथापि वा।
पञ्चवर्णैरलङ्कृत्य धान्यानि च समास्तरेत्।।

पुण्याहं वाचयित्वा च प्रोक्षणैः प्रोक्षणं चरेत्।
पश्चिमे चक्रमुद्दिश्य पीठं कुर्याद्यथोचितम्।।

ध्वजदेवं समुद्दिश्य प्राच्यां पीठं प्रकल्पयेत्।
उत्तरे चामितस्थानं तथा च परिकल्पयेत्।।

पश्चिमे चोन्नते पीठे देवीभ्यां स्थापयेद्धरिम्।

पूर्वस्मिन् दिवसे रात्रौ प्रतिष्ठोक्तक्रमेण वै।।

प्रतिष्ठाप्य पटे वीशं समावाह्य समर्चयेत्।
अलङ्कृतस्त्वथाचार्यः वस्त्राभरणमण्डनैः।।

अभ्यर्चयित्वा देवेशमनुमान्य च मन्त्रतः।
पुण्याहं वाचयित्वा तु सर्वत्र प्रोक्षणं चरेत्।।

---

सूत्रोक्तविधिना कुर्याद्वास्तुहोमं सगव्यकम्।
पटस्थगरुडस्यापि अक्ष्युन्मेषणपूर्वकम्।।

प्रोक्षणञ्चाधिवासार्थं शोषणादीनि कारयेत्।
उक्तन्यासमसमायुक्तं प्रतिष्ठाञ्च समाचरेत्।।

वीथ्यादीनां विशुद्ध्यर्थं पर्यग्निकरणं चरेत्।
पूर्वेद्युरेव सायाह्ने कुर्याद्वाऽह्नि तु मध्यमे।।

**क्रि.१४.२०**

परिवारोक्तमार्गेण नयनोन्मीलनादिकम्।
कृत्वा वीशं समावाह्य समभ्यर्च्य निवेदयेत्।।

**अ.२९**

पञ्चवर्णैरलङ्कृत्य धूपदीपैरलङ्कृतम्।
चक्रं पश्चिमतो न्यस्य तत्तत्स्थाने प्रकल्पयेत्।।

चतुरश्रं सवक्त्रं च विस्तारं चैकहस्तकम्।
उत्सेधं भागमेवोक्तं शान्तिपीठं पृथक् पृथक्।।

शाल्यर्धं तण्डुलं प्रोक्तं तदर्धं तिलमाहरेत्।

ध्वजस्य दक्षिणे चैव होमस्थानं प्रकल्पयेत्।।

औपासनविधानेन आघारं पूर्ववच्चरेत्।
गारुडं च ततो हुत्वा कुम्भं संसाध्य पूर्ववत्।।

पुण्याहं वाचयेत्तत्र वीशस्यावाहनं भवेत्।
वीशशैषिकचक्रं च ध्वजं कुम्भं सुसन्यसेत्।।

### ७.३.९ भेरीताडनयष्टेः ग्राह्या वृक्षाः

**वा.३२**

भेरीताडनकार्यार्थं उक्तदारुं यथाक्रमम्।।

देवाश्च ब्राह्मणाश्चैव क्षत्रिया वैश्यशूद्रकाः।
चन्दनं चासनं चैव शिरीषं सुप्रदं तथा।।

चम्पकं तत्क्रमेणैव कुर्यात्तद्देशिकोत्तमः।
अथवा निम्बलं चैव पुन्नागं मधुकं तथा।।

शाल्मली च प्रगृह्यैव लब्धमत्र प्रगृह्य च।
सर्ववातहता वृक्षाः सर्वं पक्षिभिरावृतम्।।

पाषाणशर्कराकीर्णं भूमिजातं प्रगृह्य च।

### ७.३.१० भेरीताडनयष्टेः अग्राह्यवृक्षाः

**वा.३२**

वक्रं च कोटरं चैव कृमिच्छिद्रं तथैव च।।

सर्पगोधाधिवासं च पिशाचादिनिवासिनम्।

स्वयं शीर्णं च दग्धं च उल्कापातं तथैव च।।

अशनिश्च महावातैः पतितानि तु वर्जयेत्।

### ७.३.११ भेरीताडनयष्टेः मानतः त्रैविध्यम्

**वा.३२**

तन्मानं त्रिविधं प्रोक्तमुत्तमं मध्यमाधमम्।
उत्तमं मुखभूताख्यं मध्यमं युगतालकम्।।

रसार्थं चाधमं विद्यात् शिल्पिना कारयेत्क्रमात्।

### ७.३.१२ भेरीवादकस्य लक्षणम्

**वा.३२**

पाराशर्यः कृतस्नानी शुद्धवस्त्रोत्तरीयकः।
ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा धारयित्वा समाहितः।।

अन्यच्च वर्तुलादीनि धृत्वा चैव यथाक्रमम्।
शिखां यज्ञोपवीतं च पवित्रं धारयेत्क्रमात्।।

शुद्धदन्तनखश्चैव निराहारो जितेन्द्रियः।
प्राङ्मुखोदङ्मुखो भूत्वा प्राणायामं सकृत्ततः।।

महाकालं च संस्मृत्य षडङ्गं चोक्तवत्क्रमात्।
यामलोक्तक्रमेणैव मातृकाद्यादीनि संन्यसेत्।।

### ७.३.१३ भेर्यामर्चनीया देवताः

**वा.३२**

भेर्यां च भूतदैवत्यं चर्मण्येव प्रजापतिम्।।

रन्ध्रे चैव महानागं दक्षिणे सूर्यमण्डलम्।
वामे चन्द्रं विजानीयात् तस्यैव तु शिरोद्वयम्।।

सुषिरे सप्तमातृंश्च दक्षिणेऽत्र विशेषतः।
वामे चैव तथा स्मृत्वा भुवश्चैव चतुर्दिशम्।।

वलये वृषदैवत्यं तद्बन्धे चैन्द्रमुच्यते।
वाचस्पतिं तु दण्डं स्यात् नन्दीशं वादके स्मृतम्।।

## ७.३.१४ भेरीताडनम्

**वा.३२**

धान्यवेदिं प्रकल्प्यैव विस्तृतं च द्विताळकम्।
दीर्घकम्पञ्च ताळं च उन्नतं गोळकं स्मृतम्।।

ऊर्ध्वे दर्भान् परिस्तीर्य प्रागग्रं चोत्तराग्रकम्।
भेरीं वेद्युपरि न्यस्य अर्चयित्वोक्तवत्क्रमात्।।

उक्तदेवान्समावाह्य निवेद्यान्तं प्रपूजयेत्।
ताम्बूलञ्च ततो दत्त्वा संशोध्य तां सवादकः।।

पश्चाद्वादकमाहूय भरतोक्तेन मार्गतः।
भेरीं सद्योधिवास्यैव नन्दीशं पूजयेत् क्रमात्।।

श्यामाकारं चतुर्बाहुं जटामकुटसंयुतम्।
रक्तवस्त्रधरं नेत्र ? शूलपाशकरस्थितम्।।

अभयं वरदं चैव नन्दीशं च समर्चयेत्।
पञ्चशब्दैस्समायुक्तैः ध्रुवाग्रे स्थापयेत्सुधीः।।

यष्टिमादाय तत्काले ओंकारं जपयेद्गुरुः।
त्रिः घोष्य च महाशब्दं ध्यायेद्देवं जनार्दनम्।।

शङ्खकाहलतन्त्रीं च वेणुशृङ्गद्वयादिषु।
ककुभं वृषदण्डं तु गोमुखी मर्द्दलं तथा।।

भेरीपटहजर्झर्यः पञ्चवाद्यानि चाहरेत्।
ततः सम्प्रोक्ष्य शुद्धात्मा 'शुची वो हव्य'मुच्चरन्।।

यष्टिमादाय तत्पश्चात् वीशस्याग्रे तु ताडयेत्।
पश्चात्सर्वं गृहीत्वैव वादकान् घोषयेत्पुनः।।

एवं तु भेरीं सन्ताड्य सामान्यं चेति कथ्यते।
विशेषमत्र वक्ष्यामि ताडयेद् भेरिकाक्रमम्।।

--- ध्रं च घनं च सुषिरं तत्र गेयादिना क्रमम्।
सर्वे ते चोत्सवे काले ध्वाजाग्रे भेरीताडनम्।।

संक्षेपेण प्रयोक्तव्यं भरते यामले क्रमम्।

**प्र.२४.८५ - ९३**

धूपदीपैरलङ्कृत्य शालिपीठं प्रकल्पयेत्।।

चतुरश्रं समं कृत्वा विस्तारं चैकभागकम्।
शाल्यर्धं तण्डुलं प्रोक्तं तदर्धं तिलमाहरेत्।।

चक्रं पश्चिमतो न्यस्य धान्यपीठोपरि स्थितम्।
तस्यैवोत्तरतः पार्श्वे विष्वक्सेनं तथैव च।।

धान्यपीठे सुसंस्थाप्य गरुडं पश्चिमामुखम्।
आग्नेय्यां न्यस्य भेरीं च पार्श्वे यष्टिं सुसन्न्यसेत्।।

देवदेवं सुसम्पूज्य द्विगुणं पूजयेत्ततः।
द्विगुणं हविरेवोक्तं देवीभ्यां च तथा भवेत्।।

चक्रादीनां पृथक् कुर्यात् आसनादीन् पृथक् पृथक्
नन्दीश्वरं तथाऽभ्यर्च्य हविर्भिश्च निवेदयेत्।।

आचार्यो यष्टिमादाय 'भूर्भुवस्सुव'रीरयन्।
उपश्वासय मन्त्रं च जप्त्वा भेरीं सुताडयेत्।।

वादकस्तु शुचिर्भूत्वा वस्त्रमाल्याद्यलङ्कृतः।
सर्ववाद्यसमायुक्तं भेरीमादाय शास्त्रवित्।।

शास्त्रोक्तेन विधानेन चक्राग्रे ताडयेत्तदा।

**अ.२९**

अत्र भेरीं सुसन्न्यस्य अर्चयित्वा यथाक्रमम्।
वस्त्रं नवं प्रदातव्यं प्रत्येकं तु पृथक् पृथक्।।

अर्चयित्वा विधानेन हविस्सम्यङ्निवेदयेत्।
देवदेवं सुसम्पूज्य पूजाद्विद्रोणगुणमाचरेत्।।

द्विगुणं हविरेवोक्तं देवीभ्यां च तथा भवेत्।
चक्रादीनां हविः कुर्यात् आढकादि पृथक् पृथक्।।

द्विद्रोणं द्रोणमेवोक्तं द्रोणार्धं वापि पाचयेत्।
मुद्गान्नतिलञ्चैव आढकार्धन्तु पाचयेत्।।

पाचयित्वा विधानेन कटाहे प्रक्षिपेद्बुधः।
लाजापूपतिलैस्सार्धं हविः प्रक्षिप्य चात्वरः।।

बलिहा (भा) रकमेवोक्तं शिष्यं वान्यद्द्विजं तु वा।

आचार्यं पूजयित्वा तु वस्त्रयुग्मं प्रदापयेत्।।

वस्त्रं चैवोत्तरीयं च हेमपुष्पाङ्गुलीयकैः।

गन्धैर्माल्यैरलङ्कृत्य वादकानां तथा भवेत्।।

शिरसा धारयेद्भेरीं पटहाचार्यको भवेत्।

ब्राह्मं तु प्रथमं जप्त्वा मन्त्रेण तु सुताडयेत्।।

ताडयित्वा त्रिधा चैव आचार्यस्याज्ञया भवेत्।

**स.५४.४६, ४७**

[अत्र 'नन्दिकेश्वरमात्मानं स्मृत्वा भेरीं च ताडयेत्' इति वर्तते इति विशेषः।]

**वि.५१.३४२, ३४३**

आग्नेय्यां धान्योपरि न्यस्तभेर्यां 'भूतीशं महाभुजं विष्णुभक्तं गदाधर'मिति भूतेशमावाह्य, अभ्यर्च्य, हविर्निवेद्य, वस्त्राद्यैर्वादकमलङ्कृत्य, आचार्यः प्राङ्मुख उदङ्मुखो वा 'उपश्वासय पृथिवी'मिति भेरीसूक्तं जप्त्वा, यष्टिमादाय दक्षिणेन हस्तेन 'भूर्भुवस्व'रिति वदन् त्रिः सन्ताडयेत्। पश्चाद्वादकस्सर्व-वाद्यसमायुक्तां भेरीं सन्ताडयेत्।

**य.३८.५४, ५५ - ५८ ; खि.३२.३५ - ३८ ;**
**क्रि.१४.२१, २२**

**ज्ञा.११. १७४**

[अत्र 'नन्दीशं महाभुजं रुद्रप्रियं भूतेशमिति नन्दीशमावाह्य -' इति दृश्यते इति विशेषः।]

### ७.३.१५ भेरीताडनोत्तरहोमः

**य.३८.५४, ५५**

[1]पश्चादग्निं परिस्तीर्य तत्तन्मन्त्रं सवैष्णवम्।।

हुत्वैव पूर्ववन्मन्त्री अन्तहोमं जुहोति च।

### ७.३.१६ भेरीताडनोत्तरं बलिहरणम्

**य.३९.१**

बलिप्रदानमार्गं च प्रवक्ष्यामि पृथक् पुनः।
सायाह्ने तु विशेषेण यजमानसमायुतः।।
(बलिं क्षिपेत्।)

**स.५४.४९**

### ७.३.१७ बलिहरणद्रव्यप्रमाणम्

**वि.५२.३४३**

[2]पश्चादाचार्यो द्रोणैर्द्रोणार्धैराढकैस्तदर्धैर्वा तण्डुलैः पक्वमन्नं कटाहे प्रक्षिप्य,

**य.३९.२ ; प्र.२४.९३, ९४**

### ७.३.१८ बलिदानविधिः

**य.३९.३ - ३३, ४१ - ४३**

मुद्गनिष्पावतिल्वांश्च लाजापूपौ प्रगृह्य च।
हेमपात्रे सुसन्न्यस्य शिष्यस्तच्छिरसा वहेत्।।

---

1. भेरीताडनावसरे भूतेशार्चनान्तरम्। 2. भेरीताडनान्तरम्।

अभिवन्द्य ध्वजं पूर्वमादाय समलङ्कृतम्।
रथे वा शिबिकायां वा यन्त्रेणाऽरोप्य मङ्गलम्।।

हविः पुष्पबलिं पात्रे सङ्गृह्यानुनयेत्पुनः।
चक्रवीशामितान् पश्चान्नाथवद्गमयेत्तथा।।

आचार्यः पुरतो गच्छेत्सर्ववाद्यसमायुतम्।
निशाचरविनाशार्थं सर्ववाद्यसमावृतम्।।

आचार्यरक्षणार्थाय मनसा स्वस्तिवाचनम्।
चक्रं चानुनयेत्तस्य वीशं चामितमेव च।।

पश्चाद्ध्वजं क्रमान्नेयात्सर्वालङ्कारसंयुतम्।
गर्भगेहस्थदेवानां ब्रह्मादीनां च पूर्ववत्।।

निक्षिप्य तद्बलिं पश्चाद् द्वारेशानां पुनः क्षिपेत्।
पुनर्विमानपालेभ्यो लोकपालेभ्य एव च।।

अन्येभ्योऽप्यनपायिभ्यः तत्तन्नाम्ना बलिं ददेत्।
गोपुरेशान् पुनर्गत्वा सर्वालङ्कारसंयुतम्।।

ग्रामं गत्वा तु सम्प्राप्य सन्धौ सन्धौ विशेषतः।
ध्यात्वा बुदध्याऽधिपान् मन्त्री भूमावावाह्य पूर्ववत्।।

अर्घ्यान्तं च समभ्यर्च्य मुष्ट्यन्नं नामभिर्ददेत्।
मध्ये तत्सन्धिमादाय प्राच्यां 'भूतेभ्य' इत्यपि।।

यक्षेभ्यो दक्षिणे पश्चाद्राक्षसेभ्यश्च पश्चिमे।
नागेभ्यश्चोत्तरे वाथ ऊर्ध्वायां दिशि तत्क्रमात्।।

राक्षसेभ्यस्तथा धीमान् पूर्वं तदुदकं पुनः।

पुष्पं बलिं तथाऽधावं सन्ददेच्चक्रसन्निधौ।।

धूपदीपसमायुक्तं घण्टानादसमायुतम्।
नृत्तगेयसमायुक्तमुक्तमुक्तदिशो यथा।।

यस्यां दिशि विमानं चेद् ब्रह्मस्थानादिकं बलिम्।
आचरेदथवा तस्य दिगीशादि बलिं क्षिपेत्।।

पश्चिमादि विमानं चेद्वरुणस्य वायुसोमयोः।
बलिं दत्वाऽथ शम्भोस्तु क्षिपेदन्यानि पूर्ववत्।।

अथवा ब्रह्मवीथिस्तद्ग्राममध्ये भवेद्यदि।
ब्रह्माद्यं चैव दिक्पालांस्तथा भूतबलिं क्षिपेत्।।

अन्यथा शम्भुमेवैते(?) तिर्यग्वीथ्यां व्यवस्थितान्।
तद्दिशाधिपदिग्धाम्नि बलिभेदोऽस्ति तस्य वै।।

धात्रंशात्पूर्ववीथ्यां तन्मध्ये ब्रह्मबलिं ददेत्।
ऐन्द्रेण सार्धं तत्रैव बलिं दत्वा खगाधिपम्।।

नमो ब्राह्मणेभ्यो वाऽत्र ब्रह्मस्थानाऽवृतावपि ?।
देवानां परितः पश्चाद्भूताद्यं पूर्ववत्क्रमात्।।

निक्षिप्यैव बलिं पश्चाच्चक्राग्रे तु गुरुः सुधीः।
नाभिवीथ्यां च परितो दिक्पालांश्च विशेषतः।।

बलिं क्षिप्त्वा तथैशान्यां निर्गम्य मतिमान् गुरुः।
प्रवेश्य मङ्गलां वीथिं नाभिसोमप्रवेशके।।

पुरन्दरबलिं क्षिप्त्वा पावकस्य पुनः क्षिपेत्।
दिगीशयोर्द्वयोर्मध्ये महावीथ्यां विशेषतः।।

सन्धिस्तद्यदि चेत्तत्र भूतानां च बलिं क्षिपेत्।
सन्ध्यन्तरगतां सन्धिमाचरेद्यदि मोहतः।।

कर्मणो वास्तुजातानामनर्थं भवति ध्रुवम्।
प्रागन्तं पश्चिमाद्यं च एकवीथिं च दण्डकम्।।

कुर्यात्तत्र च चक्राद्यैः पश्चिमाद्यं बलिं क्षिपेत्।
वरुणनिर्ऋतिवायुभ्यः पश्चिमे तु बलिं ददेत्।।

धातृयमकुबेरेभ्यः सन्धौ मध्ये बलिं क्षिपेत्।
इन्द्रपावकरुद्रेभ्यः प्राच्यां सन्धौ क्षिपेत् क्रमात्।।

उदगन्तमेकवीथिञ्चेत् दक्षिणाद्यं बलिं क्षिपेत्।
यमनीलानिलेभ्यश्च दक्षिणे मध्यमे तु वा।।

ब्रह्मवारुणशक्रेभ्यश्चोत्तरे च बलिं क्षिपेत्।
कुबेरपवनेशेभ्यो बलिं दद्यात्क्रमेण च।।

बलिमालाऽथ वास्तौ चेदिन्द्रादिभ्यो बलिं ददेत्।
मध्ये वीथिं तथेन्द्रेऽष्टौ गोपुराग्रे उदङ्मुखः।।

ब्रह्माणं च बलिं दद्यात्सर्ववीथ्यां समन्तु वा।
नद्यादिषु विमानं चेत्परितः प्रावरणे ददेत्।।
पूर्वं क्षिप्त्वा बलिं धीमान् -------------।
-----------------------------------

बलिमेवं च निर्वाप्य प्रदक्षिणवशेन तु।
शकुनसूक्तं पुनर्जप्त्वा प्रविशेदालयं पुनः।।

बलिशिष्टं भूतपीठे 'सर्वभूतेभ्य' इत्यपि।

बलिं तत्तोयशेषं च प्रक्षिपेच्चक्रसन्निधौ।।

धामप्रदक्षिणं कृत्वा ध्वजाद्यैरनपायिभिः।
सार्धं चक्रं च स्वस्थाने स्थापयेन्मतिमान् पुनः।।

**प्र.२४.९३ - ११५**

द्रोणैर्द्रोणार्धकैर्वाऽपि आढकैर्वाऽथ तण्डुलैः।।

पाचयित्वा कटाहे तु प्रक्षिपेद्बलिमुत्तमम्।
मुद्गनिष्पावतिल्वां लाजाऽपूपौ प्रगृह्य च।।

कटाहे तु सुसन्न्यस्य शिष्यस्तं शिरसा वहेत्।
अभिवन्द्य ध्वजं पूर्वमादाय समलङ्कृतम्।।

रथे वा शिबिकायां वा मन्त्रेणाऽरोप्य मङ्गलैः।
सह पुष्पं बलिं पात्रे सङ्गृह्यानुगतं पुनः।।

चक्रवीशाऽमितान् पश्चान्नाथवद्गमयेत्तदा।
आचार्यः पुरतो गत्वा सर्ववाद्यसमायुतम्।।

गर्भगेहस्थदेवानां ब्रह्मादीनां यथाक्रमम्।
द्वारेषु द्वारपालेभ्यो धामपालेभ्य एव च।।

अन्येषां परिवाराणां स्वे स्वे स्थाने बलिं क्षिपेत्।
आलयस्य बहिर्गत्वा ग्रामे सर्वत्र घोषयेत्।।

मध्यमे चालयं यत्र ब्रह्मादीशान्तमाचरेत्।
यस्यां दिशि भवेद्धाम तद्दिगादि बलिं क्षिपेत्।।

उत्सवभ्रमणं कुर्यात्प्रादक्षिण्यक्रमेण वै।
ग्रामं गत्वा तु संप्राप्य सन्धौ सन्धौ विशेषतः।।

ध्यात्वा बुद्ध्वाधिपान्मन्त्री भूम्यामावाह्य पूर्ववत्।
अर्घ्यान्तं च समभ्यर्च्य मुष्ट्यन्नं नामभिर्ददेत्।।

सन्धौ तत्सन्धिमादाय प्राच्यां 'भूतेभ्य' इत्यपि।
देवेभ्यो दक्षिणे पश्चाद्राक्षसेभ्यश्च पश्चिमे।।

नागेभ्यश्चोत्तरे चाऽथ ऊर्ध्वायां दिशि च क्रमात्।
'ये भूता' इति मन्त्रेण पूर्वं दद्याज्जलं पुनः।।

पुष्पं बलिं तथाऽधावं सन्दद्याच्चक्रसन्निधौ।
यस्यां दिशि विमानं वा ब्रह्माद्येव बलिं ददेत्।।

आचरेदथ वा तस्य दिगीशाद्यं बलिं क्रमात्।
पश्चिमस्थविमानं चेद्वरुणादि बलिं क्षिपेत्।।

अथ वा ग्राममध्ये चेद्दत्वा ब्रह्मबलिं पुरः।
ततो दिक्पालकानां च तथा भूतबलिं क्षिपेत्।

दिगीशयोर्द्वयोर्मध्ये महावीथ्यां विशेषतः।
सन्धिर्यदि भवेत्तत्र भूतानां च बलिं क्षिपेत्।।

सन्ध्यन्तरगतां सन्धिमाचरेद्यदि मोहतः।
कर्मणो वास्तुजातानामनर्थं भवति ध्रुवम्।।

प्रागन्तं पश्चिमाद्यं च एकवीथिं च दण्डकम्।
कुर्यात्तत्रैव चक्राद्यैः पश्चिमाद्यं बलिं ततः।।

वरुणनिर्ऋतिवायुभ्यः पश्चिमे तु बलिं तथा।
धात्रे यमकुबेराभ्यां सन्धौ मध्ये बलिं क्षिपेत्।।

इन्द्रपावकरुद्रेभ्यः प्राच्यां दद्यात्ततः क्रमात्।

उदगन्तैकवीथिश्चेद्दक्षिणाद्यं बलिं क्षिपेत्।।

यमनीलानलेभ्यश्च दक्षिणे मध्यमेऽपि च।
ब्रह्मवारुणशक्रेभ्यश्चोत्तरे च बलिं तथा।।

कुबेरपवनेशेभ्यो बलिं दद्यात्क्रमेण च।
नद्यादिषु विमानं चेत्परितः प्राङ्गणे ददेत्।।

पूर्वं क्षिप्त्वा बलिं धीमान् -------------।

**वा.३२**

मुद्गयुक्तं चरुं पक्त्वा कटाहे प्रक्षिपेन्नयेत्।
मणिकाद्यनपायान्तं बलिं क्षिप्त्वा यथाक्रमम्।।

अक्षहान्तं विना तत्र अन्यदेवान् बलिं क्षिपेत्।
बलिं च बलिबेरं वा तीर्थं चक्रयुतं तु वा।।

मूर्तचक्रमथैकेन ध्वजस्याग्रे व्रजेत् क्रमात्।

मूर्तचक्रं यदि स्यात्तु बलिबेरं न कारयेत्।
अथवा कुरुते विद्वान् बलिबेराग्रतः क्षिपेत्।।

गोपुरस्य बहिर्गत्वा बलिस्थानं प्रति प्रति।
तिष्ठन् शनैः शनैर्गत्वा बलिं चैव क्रमात् क्षिपेत्।।

चक्रस्याग्रे जपित्वैव यज्ञसूक्तं विचक्षणः।
तद्दिग्दैवत्यसूक्तानि जपित्वात्र प्रयत्नतः।।

तत्र स्थानं सुसम्प्रोक्ष्य 'शुची वो हव्य' मुच्चरन्।
तोयं पुष्पं तथा गन्धं धूपं दीपं चरुं तथा।।

पुनश्चैवोदकं दत्वा नमस्कुर्यादष्टविग्रहैः।

भूतादि चतुरो देवान् तद्दिग्दैवत्यपूर्वकम्।।

एतान् देवान् समभ्यर्च्य तन्नाम्ना मन्त्रमुच्चरन्।
'ये भूता' इति मन्त्रेण चोर्ध्वायां तु क्षिपेद्बलिम्।।

-------------------------------------------

सर्वं क्षिप्त्वा बलिं तत्र पुनर्मध्ये बलिं क्षिपेत्।।

आलयं तत्र देशे तु ग्रामादीनां विशेषतः।
आलयात्प्राङ्मुखे ब्रह्मा तद्दिक्पालं समर्चयेत्।।

ऐन्द्रादीशानपर्यन्तं बलिं पश्चात् क्षिपेत्सुधीः।
भूतपीठे समाविश्य बलिं क्षिप्त्वा यथाविधि।।

अन्यत् सर्वं यथाप्रोक्तं तथा कुर्याद्विचक्षणः।

-------------------------------------------

यथा नित्यबलिं कुर्यात् भूतान्तं तत्र निक्षिपेत्।

ग्रामादीनां च सर्वेषां भ्रामयित्वैव कारयेत्।
एवं क्रमो मया प्रोक्तः शृणुध्वं तद्विशेषकम्।।

एवं ग्रामे बलिं दत्वा पश्चादालयमाविशेत्।
चरुशेषं समाहृत्य भूतपीठे विनिक्षिपेत्।।

अक्षहन्तेति मन्त्रेण तत्र कार्यं समाचरेत्।

**स.५५.४८ - ५५ ; ६४ - ६९**

पक्वमन्नं बलिं पात्रे पक्वापूपसमन्वितम्।
पक्वैश्च मुद्गनिष्पावतिलतिल्वैश्च मिश्रितम्।।

पुष्पगन्धाक्षतैर्युक्तं प्रभूतं बलिमाहरेत्।

दिवैव सायात्पूर्वे च घोषणार्थं व्रजेत्क्रमात्।।

अग्रे ततादिघोषँ च कारयित्वा ततो बलिम्।
वाहयित्वाग्रतश्चैव बलिदाता गुरुर्व्रजेत्।।

चक्रं ध्वजं समादाय वाहकौ तदनुक्रमात्।
द्वारेशपरिवारेभ्यो बलिं दत्वा च पूर्ववत्।।

ग्रामं गत्वा बहिर्वीथ्यां तत्र सन्धौ बलिं ददेत्।
विग्रहैरष्टभिः पूर्वं दिग्देवं तं समर्चयेत्।।

मुष्ट्यन्नं संप्रगृह्यैव पक्कापूपादिभिर्युतम्।
नमोऽन्तेनैव तन्नाम्ना दत्वा सर्वेभ्य इत्यपि।।

भूतेभ्यश्चाथ यक्षेभ्यः पिशाचेभ्यस्तथैव च।
राक्षसेभ्यश्च नागेभ्यश्चार्चयित्वा बलिं ददेत्।।

गन्धर्वेभ्यो गणेभ्यश्च नम इत्यष्टदिक्षु वै।
अथवापि जलं पुष्पं बलिं पश्चाज्ज्ञलं ददेत्।।

---------------------------------------

ग्राममध्ये विमानं चेद्ब्रह्मस्थाने च मध्यमे।।

ब्रह्मणश्च बलिं दत्वा भूतादिभ्यो बलिं ददेत्।
दिग्देवानामथेन्द्रादि प्रादक्षिण्यक्रमेण वै।।

यस्यां दिशि विमानं स्यात्तद्दिक्पूर्वं बलिं ददेत्।
एवं ग्रामे बहिर्वीथ्यां तत्र सन्धौ बलिं ददेत्।।

प्रदक्षिणं क्रमात्कृत्वा प्रविशेद्देवमन्दिरम्।
देवालये पुनः सम्यक्प्रदक्षिणमथाचरेत्।।

बलिशेषं समादाय भूतपीठेऽप्युदङ्मुखः।
'भूतानि तृप्यन्त्वि'त्युक्त्वा भूतेभ्यश्च बलिं ददेत्।।

चक्रस्थाने तु तच्चक्रं पूर्ववत्सन्निवेशयेत्।

**अ.२९**

अग्रे भूतबलिं दत्वा सहदीपादिभिर्गुरुः।।

ध्यात्वा देवेशमात्मानं चक्रस्यानुगतो भवेत्।
चक्रपृष्ठे ध्वजं गत्वा ध्वजपृष्ठे तु शैषिकम्।।

एवमेवं च गत्वा तु प्रक्षिपेच्च बलिं क्रमात्।
द्वारपालबलिं क्षिप्त्वा विमानपालांस्तथा परम्।।

-------------------------------------

अन्येषां परिवाराणां स्वे स्वे स्थानबलिं क्षिपेत्।।

-------------------------------------

मध्ये चालयो यत्र ब्रह्मादीशान्तमाचरेत्।।

यद्दिक्षु, देवतागारं तद्दिक्ष्वादिबलिं क्षिपेत्।
ब्रह्मस्थाने यदि स्याच्चेत् ब्रह्मस्थानादिकं चरेत्।।

सर्वाणि पश्चिमाद्यानि शालान्यन्यत्र पण्डितः।
बलिमार्गवीथिकामध्ये सन्धाद्यं नास्ति चेद्बुधः।।

भूतादिभ्यो बलिं दत्वा नान्त्ये वीथीजने क्षिपेत्।

-------------------------------------

छत्रपिञ्छवितानाद्यैः चामरादिपरिच्छदैः।
धूपदीपसमायुक्तं घण्टानादसमन्वितम्।।

सर्ववाद्यसमायुक्तं नृत्तगेयसमायुतम्।
सर्वैर्भक्तजनैस्सार्धं यजमानयुतो भवेत्।।

एवं प्रदक्षिणं भूतपीठे बलिं क्षिपेत्।

**वि.५१.३४३ ;** **खि.३२.३९, ४८**

**ज्ञा.९१.१७४, १७५**

स गुरुः कटाहे बलिद्रव्यैः युक्तमन्नं प्रक्षिप्य अग्रतो ध्वजपताके ततोऽनु भेरीपटहादीनि वाद्यानि धूपदीपादीन् बलिद्रव्यं ततोऽनु छत्रपिञ्छचामरबर्हिणाद्यैः परिवृतः चक्रं ध्वजं शान्तं च विमानं ग्रामं च प्रदक्षिणं नयेत्।

**७.३.१९ उत्सवे देवतावाह्वानकालः**

**खि.३२.१०, ११**

उत्सवस्य च यावन्ति निर्दिष्टानि दिनानि वै।
तानि तु त्रिगुणीकृत्य तदादौ घोषणं चरेत्।।

केचिद्दशदिनात्पूर्वं केचिदेकादशादथ।
उत्सवादिदिने चापि घोषणं सम्प्रचक्षते।।

**य.३८.२०, २१**

अथ तीर्थदिनात्पूर्वमेकविंशदिने तथा।।

तथैव ध्वजमारोप्य नवाहं चोत्सवं चरेत्।
उत्सवस्य दिनादौ वा घोषयेद्विधिपूर्वकम्।।

**प्र.२४.३१**

**अ.२९**

उत्सवान्तदिनात्पूर्वं घोषणादन्यदुत्तमम्।।
प्रतिष्ठादिदिने कुर्यात् तद्दिने घोषणं चरेत्।

**क्रि.१४.२७ - २९**

पूर्वेद्युरेव पूर्वाह्ने कृत्वा नयनमोक्षणम्।।

रात्रौ होमादिकं कृत्वा प्रातरावाह्य पूर्ववत्।
ध्वजस्यारोहणं कृत्वा मध्याह्ने तु विशेषतः।।

देवानां घोषणं कुर्यात् रात्राविति च केचन।

**अ.२९**

आलयस्य चतुर्दिक्षु घोषयित्वा यथाक्रमम्।

----------------------------------------।।

आलयस्य बहिर्गत्वा ग्रामादीनिव घोषयेत्।

----------------------------------------।।

यथामार्गं बलिं क्षिप्त्वा तथा मार्गं च घोषयेत्।।

## ७.३.२० उत्सवे देवादीनां स्थानानि

**प्र.२४.१५३ - १६६**

आहूतव्या उत्सवार्थे देवाः सम्यक् प्रकीर्तिताः।
देवादीनां च सर्वेषां तेषां स्थानं प्रवक्ष्यते।।

इन्द्रादयो महादिक्षु विदिक्षु च समाश्रिताः।
तथैकादशरुद्राश्च द्वादशाहस्करा अपि।।

वसवस्स्युरथाष्टौ च ओङ्कारश्च वषट्कृतम्।
एते देवास्त्रयस्त्रिंशाः कथिता ब्रह्मणा पुरा।।

अश्विनावपि तत्रेति केचिदाहुर्मनीषिणः।
त्रयस्त्रिंशद्देवतानां स्थानमैशान्यमुच्यते।।

अपरे चापि कर्तव्याः नदीपार्श्वे विशेषतः।
अष्टादशगणानां तु भूतपीठस्य दक्षिणे।।

देवाश्च ऋषयः सर्वे पितरो दैत्यदानवाः।
असुराश्चैव गन्धर्वाः तथैवाप्सरसां गणाः।।

यक्षाश्च राक्षसाश्चैव नागा भूताः पिशाचकाः।
अनावृष्टिगणाश्चैव तथाऽमृतमुचां गणाः।।

मातरश्चैव रोहिण्यः सूर्या अष्टादश स्मृताः।
अष्टादशगणाश्चैते प्रोक्ता वै देवयोनयः।।

अनुक्तानन्यदेवांश्च इन्द्रपार्श्वे समर्चयेत्।
देवानां चैव पत्नीश्च तत्तत्पार्श्वे समर्चयेत्।।

स्कन्दो विघ्नश्च दुर्गा च ज्येष्ठा चैव सरस्वती।
तदालये बलिं दद्यात् प्राकारे चोत्तरेऽपि वा।।

परिवारोक्तदेशे तु रोहिण्यो मातरस्तथा।
ऋषिपत्नीश्च तास्सप्त ऋषिभिस्सह चार्चयेत्।।

सिद्धान् विद्याधरांश्चैव गरुडगन्धर्वकिन्नरान्।
किंपुरुषाश्चारणान् देवान् महादिक्षु समर्चयेत्।।

भूतेभ्यश्चाथ यक्षेभ्यः पिशाचेभ्यस्तथैव च।
राक्षसेभ्यश्च नागेभ्यः सन्धौ सन्धौ बलिं ददेत्।।

राजवेश्माङ्गणे मध्ये इन्द्रं चैव समर्चयेत्।
तस्य दक्षिणपार्श्वे तु जयश्रीकीर्तीस्समर्चयेत्।।

### ७.३.२१ देवताह्वानाधारः

**प्र.२७. ३६७**

मण्डलं च जलं कूर्चमाह्वानाधार उच्यते।

### ७.३.२२ देवतादीनामाह्वानप्रकारः

**य.३९.३३ - ४०**

--------------- गद्यैः पद्यैश्च घोषयेत्।।

नगरादौ च गद्यैश्च प्रशंस्योपांशुना बुधः।
तत्तन्मन्त्रं समुच्चार्य घोषयेत्पटहादिभिः।।

'प्रीयतां भगवान्विष्णुः सर्वदेवेश्वरो हरिः।
ब्रह्मेशाभ्यां च सहितश्चोत्सवे नः प्रसीदतु।।

देवाश्च ॠषयः सर्वे पितरश्च ग्रहादयः।
रुद्रादित्याप्सरसः सर्वे अश्विनौ च मरुद्गणाः।।

सिद्धा विद्याधरा यक्षा वसवो दैत्यदानवाः।
भूतयक्षपिशाचाश्च नागा वै राक्षसादयः।।

विष्णुलोकगतास्सर्वे लोकालोकनिवासिनः।
सर्वेऽन्ये देवतास्सर्वा परिवारगणैः सह।।

विश्वे ते विष्णुयागेऽस्मिन् समागच्छन्तु सादराः।
हव्यं बलिं समादाय भुञ्जन्तु शुभदायिनः' ।।

इत्युक्त्वा घोषयेत्सन्धौ चक्रस्याभिमुखे पुनः।
ब्रह्माद्यं स्वस्वतालैश्च घोषयेद्वादकः पुनः।।

**ज्ञा.९१.१७५**

----(गुरुः) प्राञ्जलिः देवं ध्यायन् एवं ब्रूयात्-
'प्रीयतां सर्वलोकेशः श्रीवत्सकृतलक्षणः।
भृत्यैश्च परिवारैश्चाप्यन्यैर्देवगणैः सह।।
देवेश भक्तवत्सल भक्तैरस्माभिः कृतमुत्सवं प्रतिगृह्णीष्व। अज्ञानात् न्यूनानपचारांश्च क्षमस्व' इति देवेशं प्रार्थयेत्।

'अष्टौ लोकपालाः त्रयस्त्रिंशद्देवाः नवद्वयगणाः सर्वेऽन्यदेवाः तद्देवपत्न्यश्च स्कन्दो विघ्नज्येष्ठारोहिणीगणाः मातृगणाः सर्वेऽप्यृषयः तत्पत्न्यश्च विष्णुभूतान्ताश्चान्ये विष्णुलोकगताः ब्रह्मलोकरुद्रलोकलोकान्तरस्थाः देवाः सिद्धविद्याधरगरुडगन्धर्वकिन्नरकिंपुरुषाः चारणा भूता यक्षा नागा राक्षसा बलिर्वैरोचनिः पूता शृङ्गी पूतना चरकी देवतारिः पिशाचाः पिशाच्यश्चेति सर्वेऽपि स्वैर्गणैः भृत्यैः परिवारैश्च सहैव विष्णुयागार्थमागच्छन्तु। देवेशप्रियकाम्यया समागताः सर्वेऽप्यर्पितं बलिं समादाय भुञ्जन्तु। ते यूयं तद्भुक्त्वा परं हर्षमवाप्स्यथ' इति मध्यादि परितश्चाष्टदिक्षु चोच्चार्योद्घोष्य भेर्यादि वाद्यैश्च घोषयेत्।

अथवा दिग्देवतासूक्तान्युच्चार्य सर्वागमनार्थं वाद्यघोषणमेव कारयेत्। एवं बलिं निर्वाप्याघोष्य ग्रामप्रदक्षिणं कारयित्वा ------------------।

**वा.३२**

--- पश्चाद्वा गद्यपद्यैश्च घोषयित्वा विचक्षणः।
नानाभाषैः पदैर्गद्यैः तत्तद्देशे तु घोषयेत्।।

ग्रामाग्रहारयोश्चैव केचिद्धोषं न कारयेत्।
नगरी राजधानी च पत्तने खर्वटेऽपि वा।।

दण्डके कुटिकादौ च घोषयेद्देशिकोत्तमः।
दण्डवीथीर्यदि स्यात्तु तद्दिक्पूर्वं समाचरेत्।।

इन्द्रस्थानं शनैर्गत्वा सर्वदेवान् समाह्वयेत्।
------------------------------------ ।।

इन्द्रस्य समतालं तु अग्निमूर्ध्वापफणं भवेत्।
(धातनं तालमग्रये।।)

यमस्य भृङ्गितालं च निर्ऋतेर्मल्लतालकम्।
वारुणं नवतालं च वायव्यां तर्करी तथा।।
(प्रचेतसः भृङ्गं तु मरुतस्संकरी तथा)

कौबेरं बभ्रुतालं च ऐशान्यां वृषतालकम्।
गान्धारं पूर्वभागे तु कौशेयं दक्षिणे तथा।।

पश्चिमे काम्भोजं प्रोक्तं नाटरागं तथोत्तरे।
आग्नेयं नटभाषा च तर्करीं नैर्ऋते पुनः।।

तथा गौलीं च वायव्यां हिन्दोलेशान्यकोणके।
एवं न्यस्यैव तन्मध्ये मच्छरीगेयमुच्यते।।

एवं गानमिति प्रोक्तं घोषयेद् गुरुरत्वरः।
गरुडं तु त्रिधाघोष्य विष्णुतालं ततः परम्।।

ब्रह्मतालादि सङ्घोष्य ऐशान्यान्तादि घोषयेत्।
तथैव वारुणादीनि तद्दिक्पूर्वादि घोषयेत्।।

**वि.५१.३४३, ३४४**

उत्सवं घोषयेत्। ग्रामे 'यज्ञस्य घोषदसी'त्यादि यथाकामं तत्तद्दिग्देवत्यमन्त्रांश्च घोषयेत्। अन्यत्र गद्यैः पद्यैस्तद्देशभाषयाऽन्यया गाथया च घोषयेत्। 'सर्वे देवास्सर्वा देव्यः, सर्वाः पितृपत्न्यः, सिद्धविद्याधरगरुडगन्धर्वयक्षकिन्नरनाग-भूतासुरराक्षसाद्यष्टादशगणास्सर्वेप्यायान्त्वि'त्युक्त्वा घोषयेत्। एवं ग्रामं प्रदक्षिणीकृत्य शकुनसूक्तं जपन् आलयं प्रदक्षिणीकृत्य विष्वक्सेनानपायिनौ स्वे स्वे देशे प्रतिष्ठाप्य

**स.५४.५६ - ६४, ७२, ७३**

तस्यां दिशि च तं देवं मन्त्रेणैवाथ घोषयेत्।
'यज्ञस्य घोष'दित्याद्यैरुत्सवाध्वरघोषणम्।।

यथार्हं मन्त्रसूक्तैश्च ब्रह्मेन्द्राद्यधिदेवताः।
ग्रामे कुर्यान्नगर्यादौ गद्यैः पद्यैश्च घोषयेत्।।

'एतेन चोत्सवेनैव प्रीयतां भगवान् हरिः।
ऋषयः पितरस्सर्वे पत्नीभिस्सहिता मुदा।।

आदित्या वसवो रुद्रा मरुतः स्वगणैस्सह।
सर्वे देवाश्च देवीभिर्गरुडासुरपन्नगाः।।

सिद्धविद्याधरा यक्षगन्धर्वा भूतराक्षसाः।
तथा किंपुरुषाश्चैव किन्नराश्चारणा गणाः।।

दुर्गा ज्येष्ठा महाकाली रोहिण्यो मातरस्तथा।
सर्वाश्चाप्सरसश्चैव विष्णुभूताश्च सर्वशः।।

अस्मिन् देवोत्सवे काले समागच्छन्तु सादराः।
बलिमादाय सम्प्रीताः शुभदाश्च भवन्तु ते।।

अलङ्कृताश्च विप्राद्याः सर्वे चायान्तु वै जनाः'।
उत्सवं घोषयेदेवं तत्र सन्धौ पृथक् पृथक्।।

वादकाः सर्ववाद्यांश्च घोषयेयुश्च तत्क्रमात्।

---

'बलिं भुञ्जन्तु नन्दन्तु निन्दन्तु कुजनान् भृशम्'।
एवमाद्यैश्च पद्यैश्च गद्यैरन्यैश्च मुख्यतः।।

नगर्यादौ घोषयित्वा विष्णोरुत्सवकर्मणि।

**खि.३२. ४१ - ४७, ५१**

बलिदेवांत्समावाह्य सर्ववाद्यसमायुतम्।।

घोषयेदेवमुच्चैस्तु सर्वत्र बलिसन्धिषु।
'देवेशस्योत्सवं द्रष्टुमागच्छन्त्वत्र देवताः।।

स्वगणैस्सह तिष्ठन्तु बलिं भुञ्जन्तु सादरम्'।
एवमुक्त्वा तु सर्वत्र बलिं तेभ्यः प्रदापयेत्।।

पश्चाद्वदेत् 'उत्सवेन चैतेन सुकृतेन वै।
प्रीयतां भगवान् देव' इति भक्तियुतो गुरुः।।

इन्द्रादिस्थानमासाद्य तत्तन्मन्त्रमुदीरयन्।
पूर्वोक्तविधिना कुर्याद्धोषणं वाद्यसंयुतम्।।

एवं विमानं परीत्य पश्चाद्ग्रामोत्सवं नयेत्।

आलयोक्तक्रमेणैव वीथीषु चतसृष्वपि।।

दिक्ष्वष्टसु दिशां पालान् समावाह्य समर्च्य च।
बलिं दद्यात् घोषयेच्च गद्यपद्यसमन्वितम्।।

-------------------------------------।

आब्रह्मभुवनाद्देवानुत्सवार्थं समाह्वयेत्।।

**क्रि.१४.२३, २९, ३०**

बलिना बलिबिम्बेन चक्रवीशामितैः सह।
ग्रामसन्धौ बलिं दत्वा तत्तन्मन्त्रैश्च घोषयेत्।।

-------------------------------------।

ध्वजस्यारोहणादूर्ध्वमुत्सवादिदिनादधः।।

रात्रिपूजावसाने तु ग्रामसन्धौ तु पूर्ववत्।
आहूतानाञ्च देवानां बलिं दद्याद्यथाविधि।।

### ७.३.२३ उत्सवे बलिदानस्य स्थानम्

**प्र.२७.३६६, ३६७**

देवतावाहनं यत्र देशे प्राक् क्रियते ततः।।

तत्रैव बलिदानं स्याद्यावदुद्वासनं भवेत्।

### ७.३.२४ ध्वजारोहणप्रकारः

**स.५४. ७३ - ७८ ; ८० - ८२**

'सुपर्णोऽसि गरुत्मे'ति ध्वजं स्पृष्ट्वा जपेत्पुनः।।

'भूःप्रपद्ये'ति मन्त्रेण स्थापयेदवटे ध्वजम्।
देवाभिमुखमेवैनं गरुडं कल्पयेद् बुधः।।

समुच्छ्रिते ध्वजे तत्र व्याधयोऽप्याधयोऽपि वा।
भयङ्करणि भूतानि विनश्यन्ति न संशयः।।

त्रिवेदिसहितं पीठं ध्वजमूले तु कारयेत्।
पीठोर्ध्वे ध्वजदण्डस्य परितस्तु चतुर्दिशम्।।

तालविस्तारसंयुक्तवेदीनां च पृथक् पृथक्।
उत्सेधं विस्तृतं चापि तालमष्टाङ्गुलं तु वा।।

प्रोक्षणैः प्रोक्षयित्वैव सप्तविंशतिविग्रहैः।
ध्वजे गरुडमभ्यर्च्य मौद्गिकान्नं निविदयेत्।।

-----------------------------------।
निवेदयेद्यथान्यायं नित्यमेवं समर्चयेत्।।

उत्तमं च त्रिसन्ध्यासु हविषस्सन्निवेदनम्।
प्रातर्मध्याह्नयोर्मध्यं मध्याह्ने त्वधमं विदुः।

ध्वजारोहणमेवं तु उत्सवार्थं तु कारयेत्।

## वि.५१.३४४

ध्वजस्थानमाविश्य, ध्वजं यानादवरोप्य, पाद्याद्यैरभ्यर्च्य, अनुमान्य, यन्त्ररज्जुं समादाय, ध्वजं घण्टायुतं 'स्वस्तिदाविशस्पति'रिति बध्नीयात्। आचार्यः प्राङ्मुख उदङ्मुखो वा स्थित्वा, दण्डाग्रे 'सुपर्णोऽसी'ति यन्त्रेण संयोजयेत्। 'भूरसी'त्यादिना मन्त्रेण ध्वजदण्डस्य मूलं हस्ताभ्यामवलम्ब्य 'ध्वजं प्रतिष्ठापयामी'ति प्रतिष्ठाप्य आसनाद्यैरभ्यर्च्य निवेदयेत्। आसनाद्यैरभ्यर्च्य, पुण्याहं वाचयित्वा, ब्रह्मघोषं च कृत्वा मुद्गान्नं निवेद्य, पानीयाचमनमुखवासं

निवेदयेत्। ------------------------------------------ यावत् ध्वजावरोहणं तावद्धविस्त्रिकालं द्विकालमेककालं वा निवेदयेत्। 'जयमत्युच्छ्रितं धन्यं ध्वज'मिति चतुर्भिर्नाममन्त्रैरहरहस्त्रिसन्ध्यं सप्तविंशतिविग्रहैरर्चयेदित्याह मरीचिः।

**स.५४.७८ ; क्रि.१४.२५ - २७**

**प्र.२४.१२४ - १२८, १३० - १५०**

ध्वजस्थानं प्रविश्यैव ध्वजमादाय मन्त्रवित्।।

'स्वस्ति दा' इति मन्त्रेण बध्नीयाद्रज्जुना सह।
मन्त्रेण मतिमान् पश्चात्प्राङ्मुखो वाप्युदङ्मुखः।।

दण्डाग्रे योजयेत्पश्चाच्छङ्खकाहळसंयुतम्।
समाबद्ध्य पुनस्स्निग्धं 'भूरसी'ति जपंस्ततः।।

अभिमन्त्र्य ध्वजं पश्चादासनाद्यैस्समर्चयेत्।
पुण्याहं वाचयेत्पश्चान्मुद्गान्नं तु ध्वजस्य च।।

निवेद्य मुखवासं च प्रणाममपि कारयेत्।
तत्काले मौद्गिकं चान्नं गरुडस्य निवेदितम्।।

------------------------------------

ततस्तु तोषयोद्वीशं स्तोत्रैर्ध्यानयुतो गुरुः।।

'नमो नमस्ते पक्षीन्द्र स्वाध्यायवपुषे नमः।
वाहनाय महाविष्णोस्ताराल्यामिततेजसे।।

गरुडाय नमस्तुभ्यं सर्वसर्पेन्द्रमृत्यवे।
वैनतेय महाबाहो महाबल वयोऽधिप।।

विहगेन्द्र नमस्तेऽस्तु समुत्पाटितकल्पक।
आहृतामृतकुम्भाय जननीदास्यमोचिने।।

सुरासुरेन्द्रजयिने नागेन्द्राभरणाय ते।
यदाधारमिदं सर्वं तदाधाराय ते नमः।।

पक्षौ यस्य बृहत्साम रथन्तरमपि द्वयम्।
अक्षिणी चाऽपि गायत्री त्रिवृत्साम शिरस्स्वयम्।।

स्तोम आत्मा नमस्तस्मै वामदेवाङ्गसम्पदे।
नमः प्राणादिवायूनामीशाय गरुडात्मने।।

पक्षीन्द्र पक्षविक्षेपतरङ्गानिलसम्पदा।
निरस्तासुरसन्नाह समरे शत्रुसूदन।।

प्रतिष्ठित पटे तुभ्यं नमः प्रणवमूर्तये।
कर्मणां सिद्धिमाहूतः कुरुष्व विहगेश्वर।।

दोषानपनयास्माकं गुणानावह सर्वशः।
विघ्नानि जहि सर्वाणि आत्मसात्कुरु मामपि।।

स्तुत्वैवं गारुडं मन्त्रं जपेदेकाग्रमानसः।
ध्वजस्यारोहणे यावत् तावन्मूर्त्या विशेषतः।।

त्रिकालं वा द्विकालं वा एककालमथापि वा।
हविस्सम्यङ्निवेद्यैव सप्तविंशतिविग्रहैः।।

पूजयित्वा ध्वजं पश्चात् रात्रौ भूतबलिं क्षिपेत्।
जयम् अत्युच्छ्रयं धन्यं ध्वजं, चेति ध्वजं तथा।।

ध्वजमूले तथेन्द्रादीन् दण्डे बह्माणमित्यपि।
सूर्येन्द्वग्नींस्तु फलकत्रये यष्ट्यां सुदर्शनम्।।

वलये वासुकिं रज्ज्वां त्रिमूर्तीरर्चयेत्ततः।
घण्टायां चैव ब्रह्माणं दर्भदाम्नि सरस्वतीम्।।

इति क्रमेण चावाह्य तन्मन्त्रैरर्चनं चरेत्।
ध्वजारोहणमारभ्य चोत्सवादिदिनादधः।।

सायं प्रातश्च पूजान्ते ध्वजारोहणवद्बलिम्।
शिष्येण गुरुणा चाथ चक्रस्याभिमुखे तथा।।

नित्यं रात्रौ विशेषेण तथा भूतबलिं क्षिपेत्।
वीशामितौ विना धीमान् तीर्थान्तं सर्वरात्रिषु।।

चक्रमेव नयेद्विद्वान् बलिरक्षणहेतवे।
ध्वजावरोहणं यावत् तावन्नित्यं समाहितः।।

त्रिकालं वा द्विकालं वाप्येककालमथापि वा।
पूर्वोक्तेन क्रमेणैव समभ्यर्च्य निवेदयेत्।।

ध्वजस्यारोहणं रात्रावपि कुर्वन्ति केचन।

**य.३९.४४ - ४७, ५० - ५४**

ध्वजस्थानं प्रविश्यैव ध्वजमादाय मन्त्रवित्।
'स्वस्तिदा' इति मन्त्रेण बध्नीयाद्रज्जुना सह।।

यन्त्रेण मतिमान् पश्चात् प्राङ्मुखो वाऽप्युदङ्मुखः।
दण्डाग्रे योजयेत्पश्चाच्छङ्खकाहळसंयुतम्।।

समाबद्ध्य पुनः स्निग्धं 'भूरसी'ति जपन् पुनः।
अभिमन्त्र्य ध्वजं पश्चादासनाद्यं समर्चयेत्।।

पुण्याहं वाचयेत्पश्चान्मुद्गान्नं तु ध्वजस्य च।
निवेद्य मुखवासं च प्रणाममपि कारयेत्।।

------------------------------------

ध्वजावरोहणं यावत्तावन्मूर्त्या विशेषतः।
त्रिकालं वा द्विकालं वा एककालमथापि वा।।

हविः सम्यङ्निवेद्यैव सप्तविंशतिविग्रहैः।
पूजयित्वा ध्वजं पश्चाद्रात्रौ भूतबलिं क्षिपेत्।।

ध्वजारोहणमारभ्य चोत्सवादिदिनादधः।
सायमर्चावसानान्ते ध्वजारोहणवद्बलिम्।।

शिष्येण गुरुणा वाऽथ चक्रस्याभिमुखे तथा।
नित्यं रात्रौ विशेषेण तथा भूतबलिं क्षिपेत्।।

वीशामितौ विना धीमान् तीर्थान्तं सर्वरात्रिषु।
चक्रमेव नयेद्वीथ्यां रक्षणाय बलिं तथा।।

**ज्ञा.९१.१७४ - १७६**

तं ध्वजम् अद्भिः प्रोक्ष्य एकविंशतियमायततालपरिणाहमूले वेणुयुतं वेणुं (?) सङ्गृह्य तद्यष्ट्यामग्रादधः त्रियमे 'स्वस्तिदा'इति ध्वजे बध्नीयात्। पुण्याहान्ते ध्वजदेवमभ्यर्च्य मौद्गिकं हविर्निवेदयेत्। ध्वजावरोहणं यावत्तावद्देवं सप्तविंशतिविग्रहैः नित्यमभ्यर्च्य हविर्निवेदयेत्।

**वा.३२**

पुण्याहं वाच्य तत्काले ध्वजस्याप्यधिरोहयेत्।
'हविष्मती'ति चोक्त्वा तु 'सुपर्णोसी'ति चोच्चरन्।।
सर्ववाद्यसमायुक्तं तद्ध्वजं चाधिरोहयेत्।

प्रागुत्तरं तु वारुण्यां तद्वीक्षे सर्ववृद्धिदम्।।
वायव्येशान्यवीक्षे तु सर्वधान्याभिवृद्धिदम्।

अन्यास्वाशासु वीक्ष्यं चेन्मरणव्याधिवृद्धिदम्।
एवं संलक्ष्य मतिमान् दिक्फलं सम्परीक्ष्य च।।

उत्सवारम्भदिवसात् पूर्वमेव प्रचोदितम्।
ध्वजस्थं पूजयेद्देवं --------------------।।

पश्चादालयमाविश्य देवदेवं प्रणम्य च।
अधमोत्तममार्गेण स्नपनं कारयेद् बुधः।।

पश्चाद्देवं समानीय तार्क्ष्यस्थानं समाविशेत्।
अष्टोपचारैरभ्यर्च्य घोषयित्वा नियोजयेत्।।

देवदेवं समभ्यर्च्य हविश्चैव निवेदयेत्।

खि.३२. ४८ - ५४, ५६

पादौ प्रक्षाल्य चाचम्य शान्तादीन् पूर्ववन्न्यसेत्।।

अर्चास्थानं प्रविश्यैव सम्भारानपि सम्भरेत्।
कूर्मपीठे समासीनः पुण्याहमपि वाचयेत्।।

दशदानञ्च कृत्वैव द्विजेभ्यो दक्षिणां ददेत्।
(स्थापितश्चेद्ध्वजः पूर्वं यथाशास्त्रं क्रमेण वै।।
जलेनाभ्युक्षणं कृत्वा ध्वजदण्डं विशोधयेत्।)

'सुपर्णोऽसी'ति मन्त्रेण पटमारोपयेत्सुधीः।
ऊर्ध्वयष्ट्या समारोप्य प्रदक्षिणवशं नयेत्।।

चतुर्दशयमायामामृजुं यष्टिं प्रगृह्य च।
तदग्रात्संव्यपोह्यैव त्रितालं वै विधानवित्।।

पटं तत्रैव बध्नीयात्पाशेन सुदृढेन वै।
नारिकेलयुताग्रञ्च तत्त्वचा कृतरज्जुना।।

तन्तुरज्जुयुतेनापि दर्भरज्ज्वा सवंशया।
यष्ट्याधारत्रये सम्यग्योजयित्वा तु बन्धयेत्।।

---------------------------------

ध्वजं पटस्थं गरुडं त्रिषु सन्धिषु पूजयेत्।
द्विकालं मध्यमं प्रोक्तमधमं चैककालिकम्।।

## ७.२.२५ ध्वजस्थगरुडनिवेदितान्नभक्षणफलम्

**स.५४.७९, ८०**

ध्वजस्थगरुडस्याथ मौद्गान्नं यन्निवेदितम्।
पुत्रार्थं पिण्डमश्नीयाद्या स्त्री भक्तिसमन्विता।।

पुत्रं सा जनयेच्छ्रेष्ठम् आयुष्मन्तं बलान्वितम्।

**वि.५१.३४४ ; य.३९.४८, ४९ ; प्र.२४.१२८ - १३०**

**वा.३२**

तन्निवेद्यं च तच्छेषं पृथक् पिण्डानि कारयेत्।
पुत्रार्थी स्त्रियमाहूय विवाहार्थी तथैव च।।

धनार्थी मृतपुत्री वा रोगी शत्रुजयार्थिनः।
शुचिः समाहितो भूत्वा गरुडं सम्प्रणम्य च।।

पादौ प्रक्षाल्य चाचम्य स्थित्वा चाग्रे जितेन्द्रियः।
पश्चात्पिण्डं समादाय दत्वा पिण्डं प्रति प्रति।।

यथेष्टकामं स्मृत्वैव गृहीत्वात्र प्रयत्नतः।
'कृतार्थोऽहमि'ति स्मृत्वा भोजयेत्तत्र सन्निधौ ।।

पश्चादाचम्य शुद्धात्मा गरुडं सम्प्रणम्य च।
विपरीतमाचरेदत्र फलं तत्र न विद्यते।।

**खि.३२. ५७ - ५९**

वीशार्पितं च मुद्गान्नं वन्ध्या या भुञ्जते स्त्रियः।।

तास्सुपुत्रानवाप्यैव भवेयुर्जीवभर्तृकाः।
महाभूतार्पितान्नं च भुञ्जीयाद्योऽपि वा नरः।।

भूतप्रेतपिशाचादिभयान्मुच्येत सोऽनघः।

### ७.३.२६ ध्वजानुसरणमहिमा

**स.५४.८५ - ८७**

तत्ध्वजस्यानुयाता ये जनास्ते पुण्यभागिनः।।

शुभेप्सितास्तथा देवमुत्सवेऽनुसरन्ति ये।
अज्ञात्वा विधिमेतं वै कर्तारः सन्ति यत्र वै।।

आधिव्याधिसमायुक्तस्तद्देशश्च भविष्यति।
तस्माज्ज्ञात्वा विधिं सम्यक् आचरन्त्युत्सवं बुधाः।।

### ७.३.२७ ध्वजारोहणफलम्

**स.५४.७५**

समुच्छ्रिते ध्वजे तत्र व्याधयोऽप्याधयोऽपि वा।
भयङ्कराणि भूतानि विनश्यन्ति न संशयः।।

### ७.३.२८ एक-द्वि-त्र्यहोत्सवेषु ध्वजारोहणनिषेधः

**क्रि.२६.१९, २०**

न ध्वजारोहणं कुर्यात् एकाहे च दिनद्वये।।

दिनत्रयोत्सवे चापि न कुर्यादिति केचन।

**प्र.२४.३१ ; स.५४.१२ ; ज्ञा.११.१७६**

७.३.२९ ध्वजच्छायालङ्घननिषेधः

प्र.२७.१८१

न लङ्घयेत् ध्वजच्छायां प्रदक्षिणविधिं विना।

७.३.३० ध्वजगरुडे वर्षातपादि बाधे न दोषः

वि.६८.४२१

ध्वजगरुडस्याकाशचारित्वात्तस्य वर्षातपबाधो न दोषाय भवति।

७.३.३१ उत्सवान्तं हविर्निवेदनादीनां विधिः

अ.२९

ध्वजदेवं समभ्यर्च्य त्रिसन्धिं हबिराचरेत्।।

नित्यं रात्रावुत्सवं च द्विसन्धिं चोत्तमो भवेत्।
देवदेवं सुसम्पूज्य पूजां द्विगुणामाचरेत्।।

एवमेवोत्सवं कुर्यात् प्रभूतं च हविर्भवेत्।
नित्यरात्रौ बलिं दद्यात् देवेशं नित्यमर्चयेत्।।

सायं प्रातर्हविर्दद्यात् बलिं चापि सदा क्षिपेत्।
एवमेवं सुसम्पूज्य दिनं प्रति नयेत्क्रमात्।।

घोषणादिदिनादूर्ध्वं तत्तीर्थदिवसादधः।
एवं सर्वदिनेष्वेतत् रात्रौ भूतबलिं क्षिपेत्।।

अहस्स्वेवं बलिं दद्याद्दीक्षाहःप्रभृति बुधः।
चक्रवीशामितैस्सार्धं चक्रेणैकेन रात्रिषु।।

**क्रि.१४ २९, ३०**

**य.३९.५२ - ५४**

ध्वजारोहणमारभ्य चोत्सवादिदिनादधः।
सायमर्चावसानान्ते ध्वजारोहणवद्बलिम्।।

शिष्येण गुरुणा वाथ चक्रस्याभिमुखे तथा।
नित्यं रात्रौ विशेषेण तथा भूतबलिं क्षिपेत्।।

वीशामितौ विना धीमान् तीर्थान्तं सर्वरात्रिषु।
चक्रमेव नयेद्वीथ्यां रक्षणाय बलिं तथा।।

★★★

# ४. आचार्यादिवरणम्

## ७.४.१ आचार्यशब्दनिर्वचनम्

**क्रि.२६.१०६**

आचिनोति हि शास्त्रार्थम् आचारे स्थापयत्यपि।
तस्मादाचार्य इत्युक्तः सर्वकार्योपदेशकः।।

## ७.४.२ उत्सवे वरणीय आचार्यः

**प्र.२७.२३८ - २४०**

यत्र (येन?) देवालये विष्णुः स्थाप्यते प्रथमं ततः।
तेनैव कारयेत्सर्वमाचार्येणार्चकेन च।।

तदभावे तु तत्पुत्रैः पौत्रैस्तद्वंशजैस्तथा।
तन्नियुक्तैस्तदीयैर्वा पूर्वाभावे परैश्चरेत्।।

अन्यथा क्रियते चेत्तु यजमानो विनश्यति।

## ७.४.३ उत्सवे आचार्यस्य गर्भदीक्षादोषाभावः

**क्रि.२६.२७ - २९**

ध्वजारोहणकाले तु आचार्यो गर्भवान् यदि।।

महोत्सवे पवित्रः स्यात् वर्षे वर्षे कृतो यदि।
नित्यकर्म तदाख्यातं गर्भदीक्षा न विद्यते।।

प्रोक्षणाद्यानि कर्माणि नित्यान्यन्यानि चाचरेत्।

### ७.४.४ आचार्यस्य गर्भदीक्षानियमाः

**क्रि.२६.२९ - ३१**

गर्भिणीपतिराचार्यः त्रिमासात्प्रभृति द्विजाः।।

श्राद्धान्नं तिलहोमं च दूरयानं प्रतिग्रहम्।
सिन्धुस्नानं गयाश्राद्धं वपनं प्रेतवाहनम्।।

पर्वतारोहणं चैव न कुर्यादिति वै विधिः।

### ७.४.५ यजमानस्य सपत्नीकत्वनियमाभावः

**प्र.२७.२५६, २५७**

विधुरे यजमाने तु दीक्षितः पुरुषो भवेत्।
सदारो वाप्यदारो वा दीक्षितः स्यात्कलत्रवान्।।

दम्पती यजमानौ चेदयमभ्युदयो भवेत्।

### ७.४.६ उत्सवे अपत्नीकस्याचार्यस्य दीक्षानिषेधः

**प्र.२७.२५७, २५८**

अनग्निमत्यदारे वा गुरौ तं तु न दीक्षयेत्।।

अन्यस्मिन् पदभाजि स्याद् यथासम्भवमादरः।

### ७.४.७ आचार्यादिषु आशौचवत्सु कर्तव्यक्रमः

**य.४७.९२ - ९५**

सूतकप्रेतकादौ तु कर्त्रादीनां समागमे।।

पूजयेन्नहि तद्द्रव्यैर्देवब्राह्मणवर्जितैः।

तद्द्रव्यवर्जनेनैव उत्सवं च समाचरेत्।।

हीने चैवोत्सवे शान्तिं पुनरुत्सवमाचरेत्।
आचार्यस्य तथाऽशौचे चोत्सवे च विहीनके।।

आचार्यस्य नियोगेन तस्य शिष्यः समाचरेत्।
पूर्वोक्तशान्तिकं कुर्यात्पुनरुत्सवमाचरेत्।।

**७.४.८ उत्सवे आचार्यादीनामाशौचलाभनिषेधः**

**य.३९.५५, ५६**

ध्वजारोहाद्यवरोहान्तमाचार्यस्तु विशेषतः।
आशौचं न लभेद्विद्वान् सूतकं प्रेतकं तु वा।।

तथा पदार्थिनस्सर्वे यजमानस्य तस्य च।
गुरोर्नैवोत्सवार्थं वा भविष्यत्यघमन्यथा।।

**प्र.२५.२२ ; वि.५२.३४६**

**प्र.२७.२५८, २५९**

वैधुर्यसम्भवे त्वेषां मध्ये दुष्यन्ति नैव ते।।

वत्सराशौचमितरच्चाशौचं न प्रवर्तते।
मातापित्रोर्मृतौ यत्तु प्रोक्तमभ्युदये पुनः।।

**क्रि.२६.१५३ - १५७**

उत्सवार्थं तु देवस्य प्रतिष्ठार्थमथापि वा।
कृतेऽङ्कुरार्पणे पूर्वं तत्तत्कर्मावसानतः।।

नैवाशैचं गुरोर्विद्यात् सूतकं प्रेतकं तु वा।

वृतानामृत्विजां तत्तत्कर्मारम्भात्परं न हि।।

तत्तत्कर्मावसानान्तम् इति पूर्वजशासनम्।
जात्युक्ताशौचभाजः स्युः क्षत्रियाद्याश्च सर्वशः।।

मन्त्रवद्वरणं तेषां नास्ति दीक्षा च नान्यतः।
शूद्राणामपि भक्तानां क्षत्रियाणां विशामपि।।

देवकार्याभियुक्तानां नास्त्येवाशौचलाघवम्।

### ७.४.९ उत्सवे आचार्यादीनां निषिद्धकालेऽपि क्षौरकर्मानुमतिः

**क्रि.२६. पृ.३१५**

उत्सवार्थं तु देवस्य प्रतिष्ठार्थमथापि वा।।

---------------------------------

तद्दिनेष्वर्धरात्रे तु यदीच्छेदुत्सवं नृपः ।
आचार्यस्यर्त्विजां चापि क्षौरकर्म विधीयते।।

अर्धरात्रेऽपि कार्यं स्यादिति शातातपोऽब्रवीत्।
देवकार्ये न दोषः स्यादिति पूर्वजशासनम्।।

### ७.४.१० आचार्यादीनामलङ्कारावश्यकता

**प्र.२५.१०, ११**

अलङ्कुर्याच्च गन्धाद्यैर्धूपदीपादिभिस्तथा।।

नववस्त्रोत्तरीयाद्यैस्तथा पञ्चाङ्गभूषणैः।

## ७.४.११ पञ्चाङ्गभूषणानि

**प्र.२५.११ - १४**

[1] पञ्चाङ्गभूषणं वक्ष्ये यथा कुर्यादतन्द्रितः।।

दशनिष्कप्रमाणेन कुण्डलाभरणं पृथक्।
षण्णिष्कमानं कटकम् अङ्गदं चाङ्गुलीयकम्।।

एकविंशतिनिष्काढ्यं कटिसूत्रं सलक्षणम्।
तदर्धांशप्रमाणेन ग्रीवालङ्करणं पृथक्।।

अष्टनिष्कप्रमाणेन यज्ञसूत्रं च कारयेत्।
अनेन विधिना कुर्यात् गुरोरर्धार्धमृत्विजाम्।।

## ७.४.१२ आचार्यादिवरणम्

**प्र.२५.१ - ३**

आरम्भदिवसात्पूर्वं यजमानो मुदान्वितः।।

पूर्वोक्तगुणसम्पन्नं वरयित्वा गुरुं तथा।
द्विगुणाराधनायैकम् एकं कुम्भार्चनाय च।।

होमार्थं बलिदानार्थं तथा स्थानार्चनाय च।
वृणेत्पदार्थिनः पञ्च तावतः परिचारकान्।।

**वि.५२.३४५, ३४६**

---

1.कर्ण-कर-कटि-ग्रीवा-वक्षोरूपपञ्चाङ्गानाम् भूषणानीमानि। करे अङ्गुलीय- कवलयांगदानि त्रीणि धार्यन्ते।

वा.३२

उत्सवारम्भदिवसे यजमानस्तु भक्तिमान्।।

पदार्थपञ्चकं स्मृत्वा वरयेदुक्तमार्गतः।
होमार्थं वरयेदेकं होतारं च तथा पुनः।।

अलङ्कारार्थमेकं स्यात् कुम्भदेवार्चनार्थकम्।
बल्यर्थमेकमेवं स्यात् तत्तत्कर्म नियोजयेत्।।

निष्कृतिश्चावरोपणं यागशालाप्रवेशनम्।
---------------- तीर्थं चैवावरोपणम्।।

पुष्पायागं विशेषेण गुरुणा कारयेत्स्वयम्।
तदभावे तु पुत्रस्य पुत्राभावे तु पौत्रके।।

तदभावे तु शिष्यस्य चान्यमाचार्यमाहरेत्।
अङ्कुरं प्रतिसरं चैव ----------------।।

गुरुं देवसमं दृष्ट्वा पूजयेच्चैव भक्तिमान्।
तस्मात्सर्वप्रयत्नेन गुरोर्हीनं न चाचरेत्।।

### ७.४.१३ यजमानकर्तृकगुरुप्रार्थना

स.५५.१६ - १९

उत्सवादि दिने प्राप्ते मध्याह्ने च विशेषतः।।

यजमानोऽप्यलङ्कृत्य नववस्त्रादिभिर्गुरुम्।

पूजयित्वाऽर्चकादींश्च पूजयेच्च स्वशक्तितः।।

तानेवमुक्त्वा याचेत 'यूयं भक्त्या मुदा युताः।
अमुमुत्सवयज्ञं च कारयध्वं हरेः प्रभोः।।

अविघ्नेनैव कृत्वा मे प्रसादः क्रियता'मिति।

**प्र.२५.४ ; खि.३२.१७९, १८०**

## ७.४.१४ आचार्याभावे उत्सवप्रतिषेधः

**क्रि.२६.१०५**

यथोक्ताचार्यहीने तु नारभेतोत्सवं हरेः।।

## ७.४.१५ आचार्यादिभिरनुसरणीयाः नियमाः

**वि.५२.३४६**

उत्सवादिदिने प्रभाते स्नात्वा आचार्यो यजमानयुतः प्रथमदिनोत्सवाद्यवभृथान्तं हविष्याशी अनन्यतत्परो नववस्त्रोत्तरीयाभरणयुतः पुरुषसूक्तपूर्वमरुण-नारायणाद्यष्टाक्षरपारायणं कुर्यात्।

**प्र.२५.२०, २१**

ततः प्रभृति सर्वे ते शुद्धदन्तनखास्तथा।
हविष्यभोजिनो दान्तास्त्रिकालस्नायिनोपि च।।

जितेन्द्रिया भवेयुस्ते तथाऽधश्शायिनोऽपि च।
स्त्रीशूद्राभ्यामसंभाष्य नारायणपरायणाः।।

### ७.४.१६ भगवद्यागादिष्वधिकारिणः

**ज्ञा.९३.१८२**

एतस्मिन् नित्याग्निहोत्रे यजने चातुर्वर्ण्येषु ब्राह्मणाद्याः त्रैवर्णिकाः शस्ताः। चतुर्थः शूद्रो अनुलोमोऽपि सर्वस्य नेतारं राजानं यजमानं सङ्कल्प्यैव कारयेत्। प्रतिलोमानामन्तरालानां व्रात्यानाञ्च नैवाधिकारः इति काश्यपः।

### ७.४.१७ शुध्यर्थं पञ्चगव्यप्राशनम्

**प्र.२५.८ - ११, १५, १६**

यजमानोऽपि धर्मात्मा नित्यकर्म समाप्य च।।

देवालयं प्रविश्यैव पुण्याहं कारयेत्ततः।
श्रीवैखानससूत्रोक्तमधुपर्कविधानतः।।

आचार्यमृत्विजश्चैव सम्पूज्य विधिना ततः।
अलङ्कुर्याच्च गन्धाद्यैः धूपदीपादिभिस्तथा।।

नववस्त्रोत्तरीयाद्यैः तथा पञ्चाङ्गभूषणैः।

---

आचार्यः प्रोक्ष्य चात्मानं यजमानमथार्त्विजः।
प्राश्नीयात्पञ्चगव्यं च पदार्थिभ्यश्च सादरम्।।

यजमानाय दद्याच्च मन्त्रपूर्वं विशेषतः।

### ७.४.१८ शुध्यर्थं कूश्माण्डहोमाचरणम्

**वा.३२**

अङ्कुरार्पणकादूर्ध्वं आरम्भदिवसादधः।

कूश्माण्डहोममब्जाग्नौ कारयेद् गुरुरत्वरः।।

वैष्णवं विष्णुसूक्तं च श्रीभूसूक्तमतः परम्।
महाव्याहृतिसंयुक्तं यद्देवादि चतुष्टयम्।।

नारायणाय विद्महेति ततः षड्भिश्च वैष्णवैः।
समिदाज्येन चरुणा यजेद्ध्यानसमायुतम्।।

नवाहं चैव सप्ताहं पञ्चाहं त्र्यहमेव वा।
एकाहं वा यजेत्तत्र किल्बिषस्यानुरूपतः।।

यजमानस्य शुद्ध्यर्थं आचार्यस्य विशेषतः।
ऋत्विग्भिः पावनार्थाय कूश्माण्डं प्राहुने(प्राशये?) त्सुधीः ।।

पश्चाद्देवस्य देव्योश्च यागदीक्षां समाचरेत्।

**प्र.२५.१६ - १८**

ततः पद्माग्निमाधाय परिषिच्य च पावकम्।।

'यद्देवादि' चतुस्सूक्तान्याज्येन जुहुयाद्गुरुः।
वैश्वानरेण सूक्तेन चोपतिष्ठेद्धुताशनम्।।

क्षपयित्वा ततः पापं कर्मार्हास्ते भवन्त्यतः।
कूश्माण्डहोम इत्युक्तः सर्वपापप्रणाशनः।।

### ७.४.१९ उत्सवकरणाय देवानुमतिप्रार्थना

**वा.३२**

देवदेवं समभ्यर्च्य हविरन्नं च पूजयेत्।।

पानीयमुखवासान्तं दत्त्वा देवमनुस्मरन्।
आचार्यो यजमानश्च देवदेवं प्रणम्य च।।

'अमुमुत्सवयज्ञस्य (ज्ञं तु ?) कारय त्वं हरे प्रभो।'
इत्यनुज्ञाप्य देवेशं प्राथयेत पुनः पुनः।।

### ७.४.२० परिचारककर्मनियोजनम्

**य.४०.४**

परिचारकान् समाहूय स्वस्वकर्म निवेदयेत्।

**प्र.२४.१७०**

★★★

## ५. विष्णोरुत्सवे देवतान्तरोत्सवनिषेधः

### ७.५.१ प्रवृत्ते विष्णोरुत्सवे देवतान्तरोत्सवनिषेधः

**य.४०.११ - १३**

प्रवृत्ते चोत्सवे विष्णोः सौम्यमार्गेण वास्तुषु।
अन्यदेवोत्सवं तत्र नाचरेच्चेद्विनश्यति।।

अस्मिन्देवोत्सवे यागे तद्वास्तुषु विशेषतः।
सङ्कल्प्य चोत्तरां वेदिं प्रवृत्तेऽन्यानि नाचरेत्।।

यदि (चोत्सव) चेत्सर्वनाशः स्यात्कर्त्ता भर्ता विनश्यति।
तस्मात्परिहरेद्धीमान् तीर्थान्तं तेषु वास्तुषु।।

**प्र.२४.१७७ - १७९**

**स.७९.७, ८**

सौम्यस्य देवदेवस्य चोत्सवो यत्र वर्तते।
अन्यदेवोत्सवं तत्र न कुर्यादिति शासनम्।।

तस्मिन् ग्रामेऽन्यदेवानामुत्सवं कुरुते यदि।
उत्सवो निष्फलो ज्ञेयस्सम्भवन्त्यशुभानि च।।

**वा.३४**

**खि.३२.१७६, १७७**

यत्रैव क्रियते विष्णोरुत्सवस्सर्वशान्तिदः।।

तस्मिन्देशेऽन्यदेवानामुत्सवं नैव कारयेत्।

**वि.५४.३६२**

हरेर्देवेशस्योत्सवे प्रवृत्ते तद्वास्त्वङ्गानां देवानाम् उत्सवं न कारयेत्। अन्यदेवोत्सवे प्रवृत्ते सौम्यमूर्तेर्हरेरुत्सवो न दोषाय भवेत्। नराः कल्याणं न कुर्युः।

**अ.२९**

सौम्ये सौम्योत्सवं केचिदाग्नेयं सर्वदा न वै।।

तस्य मध्ये तथा शैवमाचरेद्यदि नश्यति।
मोहाच्चेत्सर्वनाशः स्यात् तावुभौ सुकृतावपि।।

नश्यतो यजमानेन सह ग्रामो नृपस्तथा।

**क्रि.२६.१७७**

**स.५६.४५ - ४७**

सौम्यस्य देवदेवस्य प्रवृत्ते चोत्सवे हरेः।।

अन्यदेवोत्सवं तत्र न कुर्यादिति शासनम्।
उत्सवं यदि कुर्यात्तु ग्रामे तत्रान्यदैवतम्।।

उत्सवौ निष्फलौ स्यातामशुभाश्च भवन्ति च।

### ७.५.२ प्रवृत्ते विष्णोरुत्सवे मनुष्योत्सवनिषेधः

**स.५६. ४७, ४८**

देवोत्सवे प्रवृत्ते तु मनुष्यस्योत्सवस्तदा।।

तस्मिन् ग्रामे न कर्तव्यः कुर्याच्चेत् स विनश्यति।

**स.७९.२, ३**

मातृध्वजं समारोप्य ज्येष्ठायाश्च ध्वजं तथा।

तथा वृषध्वजं वापि विष्णुराजध्वजं तथा।।

बौद्धध्वजादीनारोप्य ग्राममध्ये विशेषतः।

विष्णुध्वजं न कुर्वीत सर्वशास्त्रेषु निश्चयः।।

**वा.३४**

### ७.५.३ उत्सवादौ गृहेषु शुभकर्मनिषेधः

**खि.३२.१७७, १७८**

देवदेवप्रतिष्ठादिदेवकार्ये महोत्सवे।

न कुर्युः शुभकर्माणि गृहेषु ग्रामवासिनः।।

यदि कुर्युः प्रमादाद्वै न सुखं प्राप्नुयुर्ध्रुवम्।

**क्रि.२६. १७६ ; स.७९.१**

### ७.५.४ उत्सवे ग्रामवासिनां काम्यनैमित्तिकयोर्निषेधः

**प्र.२४.१७५, १७६**

तद्ग्रामवासिनस्सर्वेऽलङ्कृताऽनन्यतपराः।

नैमित्तिकादिकं हित्त्वा ध्यायेयुर्मनसा हरिम्।।

तद्ग्रामसीमन्यन्तस्था नित्यकर्मक्रियां विना।

नैमित्तिकानि काम्यानि तीर्थान्तं नाचरेद्बुधाः।।

**य.४०.९, १०**

**अ.२६**

[अत्र नित्यहोमं द्विजाः सर्वे कुर्युरित्यधिकं दृश्यते।]

### ७.५.५ उत्सवमध्ये ग्रामान्तरगमननिषेधः

**क्रि.२६.१७८, १७९**

आरोपिते ध्वजे विष्णोरुत्सवार्थं विशेषतः।
उत्सवावभृथात्पूर्वं सर्वे तद्ग्रामवासिनः।।

अन्यत्र यदि गच्छन्ति भवन्ति व्याधयो ध्रुवम्।
भवन्ति नैव तद्ग्रामवास्तुबाह्ये निवासिनाम्।।

**ज्ञा.९१.१७६**

**प्र.२४.१५० - १५२**

उत्सवारम्भदिवसात्तत्र ये ग्रामवासिनः।।

अन्यकार्यसमासक्ता न गच्छेयुः स्थलान्तरम्।
गच्छेयुरथ वा तीर्थे निवर्तेयुरसंशयम्।।

बहिर्वीथ्यां तु तद्ग्रामे जनास्सर्वे तथैव च।
तावान्न तेषां निर्बन्धस्समीपस्थेषु स स्मृतः।।

**य.३९.५७**

**खि.३२.पृ.४२९**

उत्सवारम्भकाले तु ग्रामस्थाः ग्रामवासिनः।
अन्यत्र यदि गच्छेयुः कार्यार्थं शुभकाङ्क्षिणः।।

प्रतिगच्छेयुरेवात्र अर्वाक् तीर्थदिनात्ततः।

### ७.५.६ क्वचित् युगपदुत्सवानुमतिः

**वा.३४**

अन्यवास्तुगतानां च राजधान्यां तथैव च।

महाग्रामे च पौराणे नक्षत्रे सन्निकृष्टके।।

सर्वेषाम् उत्सवं कुर्यात् दोषो नास्ति न संशयः।
श्रद्धावित्ते च सम्पन्ने उत्सवं शीघ्रमाचरेत्।।

काल्याश्च इतरस्याश्च ग्रामे चोत्सवमाचरेत्।

**क्रि.२६.१७३ - १७५**

उत्सवे क्रियमाणे तु देवदेवस्य शार्ङ्गिणः।
तस्मिन्ग्रामेऽन्यदेवानां न कुर्यादुत्सवं पुनः।।

अन्यवास्तुगतानां च न दोषश्चोत्सवे भवेत्।
आरोपिते ध्वजे विष्णोरुत्सवार्थं तु तत्र वै।।

अर्वाक् तदवसानात्तु प्रतिष्ठां नाचरेत् बुधः।
तदालयोत्सवाङ्गांश्च स्थापयेदिति केचन।।

### ७.५.७ निमित्तोत्सवानां पूर्वापरीभावः

**य.३८.५ - १०**

ग्रामादौ चोत्सवः स्याच्चेत्क्रमेणैव च कारयेत्।
तस्मादुत्पातशान्त्यर्थमादौ काल्युत्सवं क्रमात्।।

अन्येषां क्रूरदेवानां शिष्टभूतगणस्य च।
शान्त्यर्थं कारयेत्पश्चाच्छास्त्रोक्तं शङ्करोत्सवम्।।

विशस्तिगणशान्त्यर्थं सौम्यमार्गेण वास्तुषु।
चक्रसेनेशसंयुक्तं कुर्याद्दुर्गोत्सवं पुनः।।

सर्वेषामपि देवानां मुनीनामपि सर्वशः।

पितॄणां च ग्रहाणां च पत्नीनामपि सर्वशः।।

द्विजानामपि शान्त्यर्थं लोकानामपि सर्वशः।
पुष्ट्यर्थं कारयेत्पश्चाद्देवेशस्योत्सवं क्रमात्।।

अन्यथा चेद्विनाशः स्यात्सर्वेषां न च संशयः।
तस्मात्परिहरेद्विद्वान् ग्रामादौ च विशेषतः।।

**प्र.२४.९ - १३**

### ७.५.८ ग्रामादौ रुद्रोत्सवानन्तरं विष्णूत्सवविधिः

**स.५६. ४८, ४९**

अन्येषां क्रूरदेवानां ग्रामे यत्रोत्सवे कृते।
सौम्यमूर्तेर्हरेस्तत्र कारयेदुत्सवं पुनः।।

देवोत्सवे हरेर्दृष्ट्या वर्धन्ते सर्वसम्पदः।

**अ.२६**

ग्रामादौ चोत्सवं कुर्यात् पूर्वं रुद्रोत्सवं चरेत्।
पश्चाद्विष्णूत्सवं कुर्यात् राजराष्ट्रविवर्धनम्।।

तत्र रुद्रोत्सवं कुर्यात् विष्णोर्वै उत्सवं विना।
तद्ग्रामस्य तु नाशः स्यात् कर्ता भर्ता विनश्यति।।

### ७.५.९ उत्सवालङ्काराणामन्योन्यसङ्करनिषेधः

**स.७९. ४ - ६**

रुद्रादिक्रूरदेवानां ग्रामे पूर्वकृतोत्सवे।
तद्योग्यानप्यालङ्कारांस्तोरणादीन् व्यपोह्य च।।

अन्यैस्सौम्यैरलङ्कारैरलङ्कुर्यात् समाहृतैः।
वैखानसविधानेन विष्णोरुत्सवमाचरेत्।।

अन्योन्यसङ्करे प्राप्ते विनश्यति न संशयः।
अन्येषाम् उत्सवं पूर्वं कुर्याद्विष्णोरनन्तरम्।।

**स.७९.१० - १३**

अङ्कुरैश्च पताकैश्च छत्रैश्चापि ध्वजैरपि।
तालवृन्तैश्च पिञ्छैश्च पात्रैरन्यपरिच्छदैः।।

यात्रायानाद्यलङ्कारवस्त्रैर्वाप्यन्यभूषणैः।
अन्यदेवार्पितैरत्र प्राप्ते सौम्ये च सङ्करे।।

ग्रामोऽग्निना भवेद्दग्धो नराश्च व्याधिपीडिताः।
वीर्यनाशस्तपोनाशस्तद्ग्रामश्च विनश्यति।।

विष्णोरुत्सवकाले तु तस्मादन्योत्सवं त्यजेत्।

**वा.३४**

रुद्राद्यन्यदेवानां ग्रामे पूर्वं कृतोत्सवे।
तत्तद्वीथीष्वालङ्कारदर्भमालाश्च तोरणाः।।

कदलीक्रमुकैश्चान्यैः पताकाभिर्ध्वजैर्युतम्।
एतान्सर्वान् व्यपोह्यैव कृत्वा तद्ग्रामशान्तिकम्।।

सौम्योत्सवञ्च कर्तव्यं सर्वसम्पत्समृद्धिदम्।
सर्वत्रैवोत्सवं कुर्यात्सर्वशास्त्रस्य निश्चयः।।

अज्ञानादर्थलोभाद्वा अथवा वैरकारणात्।
अनुक्तालङ्कृते ग्रामे यदि सौम्येत्सवं कृतम्।।

राज्ञो राष्ट्रस्य ग्रामस्य महादोषो भवेद् ध्रुवम्।

**वा.३४**

काल्याश्च इतराद्याश्च ग्रामे चोत्सवमाचरेत्।
तत्तद्वीथीष्वलङ्कार दर्भमालादितोरणम्।।

व्यपोह्यैव च तत्सर्वं पुनस्सौम्योत्सवं चरेत्।
तोरणैर्दर्भमालाभिः कदली क्रमुकैर्युतम्।।

अङ्कुरैश्च पताकैशच छत्रैश्चापि ध्वजैर्युतम्।

### ७.५.१० वाद्यसांकर्यानुमतिः

**वा.३४**

शङ्खभेर्यादिवाद्यैश्च शृङ्गकाहलकादिषु।।

अन्योन्यसङ्करं कुर्यात् दोषस्तत्र न विद्यते।

★★★

# ६. अङ्कुरार्पणम्

## ७.६.१ उत्सवे अङ्कुरार्पणकालः

**वा.३२**

आरम्भदिवसात् पूर्वं पञ्चमे वाऽङ्कुरार्पणम्।

**वा.३२**

**प्र.२४.१८०**

उत्सवादि दिनात्पूर्वं सप्तमे पञ्चमेऽथवा।
संस्नाप्य देवदेवेशमङ्कुरार्पणमाचरेत्।।

**य.४०.१४**

**वि.५२.३४६**

उत्सवं यद्दिने कर्तुमुद्योगः तद्दिनात्पूर्वं नवमे सप्तमे पञ्चमे तृतीये वाहनि अङ्कुरार्पणं कुर्यात्।

**ज्ञा.९२.१७७**

तीर्थदिनात् पूर्वं नवमे सप्तमे पञ्चमे त्र्यहे वा रात्रौ सुमुहूर्ते पूर्वोक्तेन विधिनाङ्कुरानर्पयेत्।

**खि.३२.८४, ८५**

तीर्थोक्तदिवसात्पूर्वं नवमे वाथ सप्तमे।।

पञ्चमेऽहनि वा कुर्यादेवमेवाङ्कुरार्पणम्।

**क्रि.१४.३६ ; य.४०.२६ - ३४**

**स.५५.३७ ; वा.३२ ; अ.२९**

**य.४७.४३ - ४५**

नवाहं वाथ सप्ताहं [1]द्विधा चोत्सव उच्यते।।

[2]तयोरुत्सवयोरादौ रात्रौ तीर्थाङ्कुरार्पणम्।
अन्येषां चोत्सवानां तु चोत्सवादिदिनं विना।।

तीर्थस्योक्तदिनात्पूर्वं नवमे वाऽङ्कुरार्पणम्।

**य.३८.२२**

घोषणादिदिनात्पूर्वं कारयेदङ्कुरार्पणम्।।

**प्र.२४.३२**

**ज्ञा.९१.१७३**

[3]तत्पूर्वं अङ्कुरानर्पयित्वा

**७.६.२ अङ्कुरार्पणस्थानम्**

**खि.३२.८३, ८४**

आलयस्योत्तरे पार्श्वे प्रथमावरणे क्रमात्।
अङ्कुरानर्पयित्त्वा तु उत्सवारम्भमाचरेत्।।

उत्तमं मध्यमं वापि कारयेदुत्सवं ततः।

**य.४०.३५**

---

1. पाठान्तरं - पञ्चाहं त्रिविधोत्सवः।
2. उत्सवस्यादिरात्रौ तु अङ्कुरार्पणमाचरेत्।।
3. ध्वजारोहणात्

### ७.६.३ अङ्कुरार्पणार्थं मृत्सङ्ग्रहणम्

**वि.५२.३४६, ३४७**

[1]सायाह्ने यजमानेन आचार्यः शिष्यैस्सार्धं वस्त्रोत्तरीयाभरणैरलङ्कृत्य, चक्रवीशशान्तान् सप्तविंशतिविग्रहैरभ्यर्च्य, अलङ्कृत्य, यानमारोप्य, शिरसा धारयन् तीर्थाङ्कुरार्थं मृत्सङ्ग्रहणार्थं भक्तानां ब्राह्मणानां शिरोभिः पालिकादीन् धारयन् वस्त्रमाल्यालङ्कृतं खनित्रं चानीय, सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतं 'विष्णुर्मां रक्षत्वि'ति अग्रतो गच्छेत्।

आलयाद् ग्रामाद्वा प्राचीमुदीचीमैशानीं वा दिशां गत्वा, संशोध्य, उपलिप्य, तस्मिन् भूलोकवद्वर्तुलमुल्लिख्य, तन्मध्ये महीदेवीं ध्रुवबेरस्य बाहुसमां स्तनान्तां वा ऊर्ध्ववक्त्रामैशान्यां न्यस्तमौलिकां, नैर्ऋत्यां न्यस्तपादां, दक्षिणमाकुञ्च्य वामं प्रसार्य शयानां, द्विभुजां, धृतोत्पलदक्षिणहस्ताम् ऊरुप्रसारितवामहस्तां, यथालाभाभरणाम्बरान्वितां नवतालमानेन कल्पयित्वा, 'आपो हि ष्ठा'द्यैरभ्युक्ष्य, एकादशोपचारैरभ्यर्च्य, तामनुमान्य, ललाटे बाह्वोः स्तनयोर्वा 'मेदिनी'मिति मन्त्रेण 'त्वां खनामी'ति आचार्यः प्राङ्मुखं उदङ्मुखो वा खनित्वा, हेमादिपात्रे मृदं गृहीत्वा, वस्त्रैराच्छाद्य, तत्क्रमेण ग्रामं प्रदक्षिणीकृत्य, देवालयं प्रविश्य, अङ्कुरार्पणस्थाने मृदं सन्यस्य, विधिना अङ्कुरार्पणं कारयेत्।

**खि.३२.६० - ८४**

उत्सवादिदिने विद्वान् अपराह्ने यथाक्रमम्।

---

1. सायाह्ने - उत्सवादिदिने सायाह्ने इत्यर्थः।

मृत्तिकाग्रहणं कुर्यादङ्कुरार्थं विशेषतः ।।

एतत्पूर्वन्तु मध्याह्ने देवेशस्नपनं चरेत्।
सायं नित्यार्चनान्ते तु आचार्यो देवसन्निधौ ।।

स्वर्णादिपात्रे सन्न्यस्य द्विप्रस्थं तण्डुलं कुशम्।
नालिकेरञ्च ताम्बूलं निष्कं सौवर्णदक्षिणाम् ।।

नी 'त्वोत्सवं कुरुष्वे'ति यजमानेन पूजितः।
आचार्यस्सुप्रसन्नात्मा 'प्रीयतां भगवा' निति ।।

प्रार्थनासूक्तमुच्चार्य देवेशं प्रणमेत्तदा।
शिष्यहस्ते ददेत्पात्रं चक्रशान्तौ समानयेत् ।।

पूर्वोक्तां दिशमुद्दिश्य गच्छेत्सूक्तजपैस्सह।
आचार्यस्साधनैर्युक्तः शिष्येण सहितो व्रती ।।

गोमयेनोपलिप्ते तु पुण्याहजलपाविते।
संस्थाप्य देशे शान्तादीन् पुण्याहं वाचयेत्पुनः ।।

ध्वजतूर्यादिकान् सर्वान् पुरस्कृत्य ततो व्रजेत्।
प्राच्यां सर्वसमृद्धिस्स्यात् आग्नेयां धान्यनाशनम् ।।

याम्ये जनविनाशः स्यात् नैर्ऋत्यां धननाशनम्।
अनावृष्टिश्च वारुण्यां राजकोपश्च पावने ।।

सौम्ये पुत्रसमृद्धिस्स्यादैशान्यां सुखदं भवेत्।
एतासां तु दिशां मध्ये प्रशस्तास्स्युरथान्तराः ।।

नवतालेन मानेन वर्तुलां कल्पयेद् भुवम्।
वाल्मीक्या मृत्स्नया पञ्चवर्णैस्सम्यगलङ्कृताम्।।
समालिखेत्तत्र देवीं हरिणीं हरिवल्लभाम्।
ऊर्ध्ववक्त्रां च शयितां ऐशान्ये न्यस्तमस्तकाम्।।

नैर्ऋतन्यस्तपादाब्जां मेदिनीं परिकल्पयेत्।
पुष्पादिना समभ्यर्च्य प्रोक्षणैः प्रोक्षणं चरेत्।।

'उद्धृतासि वराहे'ति वराहं भावयेद् गुरुः।
एकादशोपचारैश्च भूसूक्तेनार्चयेत्क्रमात्।।

तत्पूर्वे वीशमभ्यर्च्य दक्षिणे चक्रमर्चयेत्।
वस्त्रेण भूषणैर्माल्यैर्गन्धैर्देवीं च भूषयेत्।।

ततोऽनुज्ञाप्य तां देवीं तदङ्गे मृदमाहरेत्।
ललाटे सर्वदोषघ्नं बाह्वोर्बहुसुवर्णदम्।।

स्तनद्वये कुलवृद्धिः जठरे सर्वसम्पदः।
अधःकाये मृदं तत्र नाहरेत कदाचन।।

एवं ज्ञात्वा विधानेन मेदिनीं मनसा स्मरन्।
'त्वां खनामी'ति चोक्त्वा तु खनित्रं घनमाहरेत्।।

उभाभ्यामपि हस्ताभ्यां खनित्रेण खनेद् भुवम्।
महीं देवीमनुज्ञाप्य तालनिम्नं तु खानयेत्।।

अपोह्योर्ध्वगतां मृत्स्नां तदधोभागगां मृदम्।

उच्चरन् वैष्णवान् मन्त्रान् शुद्धपात्रे तु सङ्ग्रहेत्।।

सौवर्णे राजते वापि ताम्रे कांस्येऽथ मृण्मये।
चक्रशान्तौ समभ्यर्च्य अपूपांश्च निवेदयेत्।।

पश्चाद् गन्धांश्च ताम्बूलं दक्षिणां च विशेषतः।
दद्यादाचार्यपूर्वेभ्यो द्विजेभ्यो देवसन्निधौ।।

सर्ववाद्यसमायुक्तो मृदमादाय वाहने।
शिरसा धारयित्वा वा पुरस्ताच्चक्रशान्तयोः।।

ग्रामप्रदक्षिणं नीत्वा देवालयमुपाव्रजेत्।
आलयस्योत्तरे पार्श्वे प्रथमावरणे क्रमात्।।

अङ्कुरानर्पयित्वा तु उत्सवारम्भमाचरेत्।

**वा.३२**

आरम्भदिवसात्पूर्वं पञ्चमे वाङ्कुरार्पणम्।
तद्दिने चापराह्ने तु गरुडं समलङ्कृतम्।।

गच्छेत् मृद्ग्रहणार्थाय शिष्यस्य शिरसि धारयेत्।
सुवर्णं रजतं ताम्रं कांस्यपात्रमथापि वा।।

पात्रं खनित्रं सङ्गृह्य शिरस्युपरि धारयेत्।
'विष्णुस्त्वां रक्ष'मुच्चार्य गमयेदग्रतः क्रमात्।।

साङ्कुरैः पालिकैः ग्राह्यं तस्याग्रे शिरसि न्यसेत्।
ग्रामाद्बहिर्गते चैव ऐशान्यं देशमाश्रयेत्।।

अथवा सौम्यदेशे तु अन्यद्देशं न शस्यते।
तत्र स्थानं च सम्प्रोक्ष्य 'दधिक्राव्ण'मुच्चरन्।।

भूरूपं तु तथा लेख्यं 'भूमिर्भूम्ने'ति च ब्रुवन्।
ऐशान्यां च शिरोभागं नैर्ऋत्यां पादमालिखेत्।।

ऊर्ध्वे मुखं प्रदृश्यैव रूपं तत्रैव लेखयेत्।
पुष्पगन्धादिनाभ्यर्च्य स्मृत्वा देवीं प्रणम्य च।।

खनित्रमादाय तत्काले वराहं मनसा स्मरेत्।
'त्वां खनामी'ति मन्त्रेण मृदं सङ्गृह्य बुद्धिमान्।।

ललाटे बाहुदेशे तु हृत्कट्यां तु तथैव च।
स्तनपार्श्वे खनित्वा तु अन्यदेशे न खानयेत्।।

'मेदिनी'ति च मन्त्रेण मृदं सङ्गृह्य बुद्धिमान्।
पात्रमध्ये सुसंन्यस्य पूर्ववच्छिरसि न्यसेत्।।

पश्चाद्देवीं ततोद्वास्य अवटं तत्र पूरयेत्।
अग्रतो गमयेत्पश्चात् ग्रामादीनां प्रदक्षिणम्।।

आलयं सम्प्रविश्यैव प्रदक्षिणमथाचरेत्।
पादौ प्रक्षाल्य चाचम्य गरुडं सम्प्रणम्य च।।

यथोक्तस्थानमाविश्य अर्चयित्वाष्टविग्रहैः।
पश्चान्मृदं गृहीत्वैव तीर्थार्थं चाङ्कुरार्पणम्।।

उक्तवन्मृच्च गृह्यैव नवाधिकदिनं यदि।
यावत्तीर्थदिनात्पूर्वं नवमे सप्तमेऽथवा ।।

पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम्।
(चषके वान्यपात्रे वा संचयेद्देशिकोत्तमः।)

**प्र.२५.२३ -४३**

**स.५५.२० - ३७**

तीर्थस्याङ्कुरमुद्दिश्य कुर्यान्मृद्ग्रहणं पुनः।।

सायाह्ने तत्र देवेशं विष्वक्सेनं च भक्तितः।
चक्रं च गरुडं चापि सप्तविंशतिविग्रहैः।।
अर्चयित्वा विधानेन देवदेवं प्रणम्य च।
चक्रं च विष्वक्सेनं च वस्त्रमाल्यादिभूषणैः।।

अलङ्कृत्यैव तच्चक्रं यानेनैव करेण वा।
संनयेद्विष्वक्सेनं च पश्चाद्यानेन संनयेत्।।

वाद्यघोषणसंयुक्तं छत्रपिञ्छादिसंयुतम्।
हस्तेन शिरसा वाऽथ नयेन्मृद्ग्रहणाय तौ।।

तस्यैवानु खनित्रं च वस्त्रपुष्पैरलङ्कृतम्।
पालिकाश्छिद्रकुम्भांश्च भक्तैरेव ततो नयेत्।।

उदीचीं वाप्यथैशानीं प्राचीं वा यदि संव्रजेत्।

तत्र मृद्ग्रहणं सर्वं सुखायैव नृणां भवेत्।।

अन्यासु दिक्षु गच्छेच्चेत् सर्वदुःखाय वै भवेत्।
ग्रामस्य वास्तुनो बाह्ये गत्वा देशे मनोरमे।।

चक्रं च विष्वक्सेनं च प्राङ्मुखं स्थापयेत् पुनः।
प्रमुखे चोपलिप्यैव दशतालक्रमेण वै।।

मेदिनीमूर्ध्ववक्त्रां तामैशान्ये न्यस्तमौलिकाम्।
नैर्ऋते न्यस्तपादां च कल्पयेत्तद्विधानतः।।

एकादशोपचारेण देवीमभ्यर्च्य मन्त्रतः।
पुण्याहं वाचयेत्तत्र ब्रह्मघोषसमायुतम्।।

'मेदिनी देवी'त्युच्चार्य मेदिन्यां मुखदेशतः।
तद्बाह्वोः स्तनयोर्मध्ये जठरे वा मृदं हरेत्।।

मुखे चेत् सर्वदोषघ्ना बाह्वोर्बहुसुवर्णदा।
स्तनयोः कुलवृद्धिस्स्याज्जठरे सर्वसम्पदः।।

भवन्त्येवेत्यधस्ताच्चेत् सर्वनाशाय वै भवेत्।
उदङ्मुखः खनित्रेण प्राङ्मुखो वाऽथ खानयेत्।।

तालमात्रं व्यपोह्यैव मृदमाहृत्य वै ततः।
शुद्धपात्रे गृहीत्वैव शिरसा तां वहन् व्रजेत्।।

ग्रामं प्रदक्षिणीकृत्य देवागारं प्रविश्य च।

स्वस्तिसूक्तं वदन्नेव मृदं सम्यङ् निधापयेत्।।

चक्रं शान्तं यथास्थाने स्थापयेत्पूर्ववद् बुधः।

तन्मृदा पालिकाद्यास्तु पूरयित्वा यथाविधि।।

तत्तीर्थदिनपूर्वस्मिन्नवमे वाऽथ सप्तमे।

पञ्चमेऽहनि वा कुर्याद् भक्तियुक्तोऽङ्कुरार्पणम्।।

**ज्ञा.९२.१७७ ; क्रि.१४.३४, ३६**

**अ.२९ ; य.४०.२७ - ३६**

★★★

# ७. उत्सवसम्भारसङ्ग्रहणम्

## ७.७.१ उत्सवार्थं यानादीनां सम्भाराणां सम्भरणम्

### वि.५२.३४५

शिबिकारथरङ्गडोलायन्त्रमुखमण्टपगजतुरगगरुडसिंहव्यालहंसभ्रमणादीनि यानानि शक्तितः कारयेत्। मालादीपयन्त्रदीपहस्तादिदीपशूलदीपादीन्, भेरीपटहमर्दलगोमुखतालकाहलमुरजशङ्खजर्झरमञ्जुलदर्दुरशङ्खशृङ्गधारावीणावेणुझल्लरीश्च शक्तितः कारयेत्। छत्राणि नानाविधानि पिञ्छान्यनेकविधानि व्यजनानि चामराणि विविधान् ध्वजान् पताकांश्च वितानतरङ्गस्तम्भवेष्टनान्याहृत्य, यथोक्तं समित्पुष्पदर्भहोमद्रव्यबलिद्रव्यपुष्पगन्धधूपदीपार्घ्यद्रव्यं हविर्द्रव्यं नववस्त्रतन्तुहेमरत्नधान्यतण्डुलघृतदधिक्षीराणि दीपार्थं घृतं तैलं वा आहरेत्। हविरर्थं तण्डुलं बहूपदंशगुलफलसहितं भक्तानां ब्राह्मणादीनां भोजनार्थानि यानि द्रव्याणि तानि सर्वाणि च संभरति। नर्तकान् गायकान् भक्तान् परिचारकांश्च यत्नेनाऽऽह्वयेत्।

### स.५५.२ - ७, १० - १२

ध्वजमारोप्य पश्चाद्वै संभारानपि संभरेत्।।

रङ्गांश्च शिविकाश्चापि यन्त्रदेवालयांस्तथा।<br>
यन्त्रमन्त्रपिकांश्चैव वृक्षयन्त्राणि चैव हि।।

भ्रमत्तुरङ्गयन्त्राणि खगवाहनयन्त्रकान्।<br>
तथा गरुडयन्त्राणि श्वेतछत्राणि चामरान्।।

छत्राण्यन्यानि सर्वाणि व्यजनानि च सर्वशः।<br>
हस्तदीपांस्तथा यन्त्रमालादीपांश्च कारयेत्।।

दीपार्थं तु घृतं चापि तैलं वाथ समाहरेत्।
हेमपात्राणि रूप्याणि ताम्रकांस्यमयान्यपि।।

मृण्मयानि च पात्राणि यत्नादन्यानि शक्तितः।

-----------------------------------------

दर्भान् पुष्पाणि गन्धांश्च हविर्द्रव्याणि सर्वशः।।

विविधानि च वस्त्राणि तथैवाभरणानि च।
नर्तकान् गायकांश्चापि भक्तानन्यान् बहूनपि।।

आनयेत प्रयत्नेन पश्चादुत्सवमारभेत्।

**प्र.२४.१६७ - १६९ ; ज्ञा.९२.१७६ ;**
**य.४०.१ - ३ ; क्रि.१४.३१ ;**

**वा.३२**

प्रतिष्ठोक्तक्रमेणैव यागद्रव्यं समाहरेत्।
---------------------------------- ।।

प्रणिधीन् कलशादीनि नवानि परिगृह्य च।
विनियुक्तं तु मृद्भाण्डं सर्वं त्यक्त्वा प्रयत्नतः।।

सोपदंशं हविर्द्रव्यं होमद्रव्यं तथैव च।
समिद्दर्भकुशादींश्च स्रुक्स्रुवादींस्तथैव च।।
अष्टमङ्गलमाद्यं च तोरणादीन् प्रगृह्य च।।

रक्तं श्वेतं तथा श्यामं कृष्णं पीतनिभं तथा।
अन्यैर्विविधवर्णानि अम्बराणि प्रगृह्य च।।

गायकान्नर्तकीश्चैव विविधान् वादकानपि।
गणिकाश्चान्यभृत्यांश्च सर्वानाहूय चादरात्।।

चामरैः छत्रपिञ्छैश्च विविधैस्तालपिञ्छकैः।
ध्वजैः पताकैर्विविधैः वितानैर्विविधैरपि।।

महायवनिकादीनि सर्वं सङ्गृह्य चादरात्।
अन्यैर्विविक्तपात्रादि सर्वं संभृत्य यत्नतः।।

ताम्बूलं मुखवासं च क्रमुकस्य फलैर्युतम्।
एलां संभृत्य कर्पूरं धूपद्रव्यं समाहरेत्।।

कर्पूरागरुकोष्ठं च उशीरं गुग्गुलुं तथा।
घनचन्दनसंयुक्तं धूपद्रव्यमिति स्मृतम्।।

अन्यत् सर्वं समाहृत्य नित्यपूजोक्तमार्गतः।

## ७.७.२ उत्सवे देवयानकल्पनम्

### अ.२९

उत्सवार्थं तु देवानां विधिना यानमाचरेत्।
रथरङ्गं तु शिबिकां नानामार्गं प्रकल्पयेत्।।

विमानाकृतिमेवोक्तं गोपुराकारमेव च।
मण्डपाकारमेवोक्तं कूटाकारं च वाऽऽचरेत्।।

शिल्पशास्त्रविधानेन देवोक्तं यानमाचरेत्।

### ७.७.३ उत्सवे पञ्चद्रव्याणि

**य.४७.१२४, १२५**

गेयं नृत्यं च वाद्यं च धूपदीपौ तथैव च।।

पञ्चद्रव्यमिति प्राहुस्तद्विना स्यान्न चोत्सवः।

### ७.७.४ उत्सवे अशक्तानां सम्भाराहरणम्

**ज्ञा.९२.१७६**

अशक्तश्चेत् परिच्छदान् हविर्द्रव्याणि सम्भारानपि सम्भृत्य

### ७.७.५ कांस्यादिपात्राणां शोधनम्

**वा.३२**

पात्रं कांस्यादिकं चैव यथार्हं शोधयेत्पुनः।

★★★

# ८. कुम्भदेवाराधनम्

## ७.८.१ उत्सवे आस्थानमण्डपकरणम्

**वि.५२.३४४ , ३४५**

आलयाभिमुखेऽन्यस्मिन् शुभ्रे देशे वा आस्थानमण्टपं कूटं वा पञ्चहस्तादिभेदेन प्राङ्मुखं दक्षिणामुखं आलयद्वारदिङ्मुखं वा परिकल्प्य, तत्प्रमुखे द्वात्रिंशत्स्तम्भादिशतस्तम्भान्तैः स्तम्भैर्युक्तं नृत्तमण्डपं कूटं प्रपां वा कृत्वा, प्रपायां मध्ये वर्षनिवारणं कूटं युक्तितः कारयेत्।

**प्र.२४.१७१ ;　　य.४०.५ ;　　अ.२९ ;**

**स.५५.७ - ९ ;　　खि.३२. पृ.४२९**

## ७.८.२ आलयाद्यलङ्करणविधानम्

**ज्ञा.९२.१७६**

उत्सवादिदिने देवालयं सम्मार्ज्य गोमयेनोपलिप्य छत्रचामरपद्मोत्पलादिकुसुमानि पूर्णकुम्भपालिकादीनि गजाश्वसिंहचक्रवाकहंसध्वजपताकाकदलीक्रमुकादि-रूपाणि पैष्टिकादिपञ्चवर्णैः कारयित्वा आलयं सर्वत्र धूपदीपैश्च वितानध्वज-दर्भमालास्तम्भवेष्टनपुष्पदामाद्यलङ्कारैरलङ्कृत्य द्वारेषु क्रमुकपूर्णकुम्भाङ्कुरान् सन्न्यस्य ग्रामवीथीः संशोध्याभ्युक्ष्य कदलीक्रमुकपूर्णकुम्भाङ्कुरध्वजादि-भिरलङ्कृत्य तद्ग्रामवासिनो जना अप्याभरणगन्धमाल्यैरलङ्कुर्युः।

**वा.३२ ;　　वि.५२.३४५, ३४६**

**अ.२९**

पत्तनं शोधयित्वा तु सलाजकुसुमैस्तिलैः।।

गृहद्वारेषु सर्वत्र कदलीक्रमुकैर्युतम्।
मुक्तादामैः ध्वजैः पुष्पैः धूपदीपसमायुतम्।।

पूर्णकुम्भसमायुक्तं पताकाध्वजसंयुतम्।
एवमेव प्रकारेण नगरे पत्तने चरेत्।।

तद्ग्रामवासिनस्सर्वेऽलङ्कृतास्तदहर्भवेत्।

**स.५५.१२ - १५**

आलयं सिकताभिश्च मृष्टसिक्तोपलेपनैः।।

पञ्चवर्णैरलङ्कुर्यात् दर्शनीयं यथा भवेत्।
तद्द्वारे तोरणैश्चापि कदलीक्रमुकैर्ध्वजैः।।

अङ्कुरैः पूर्णकुम्भाद्यैरलङ्कारं च कारयेत्।
शोधयेद् ग्रामवीथीश्च मृष्टसिक्तोपलेपनैः।।

तद्ग्रामे च गृहद्वाराण्यलङ्कुर्याच्च तोरणैः।
अङ्कुरैः पूर्णकुम्भैश्च कदलीक्रमुकादिभिः।।

**वा.३२ ; खि.३२ - पृ. ४२९**

**य.४०.४, ६ - १०**

आलयं समलङ्कृत्य तोरणाद्यैर्विभूष्य च।
------------------------------------ ।।

'अवधूते'ति मन्त्रेण ग्रामवीथीर्विशेषतः।
विप्रा वेदविदः शुद्धाः शोधयेयुर्मनोरमम्।।

'आशासु सप्त' इत्युक्त्वा गन्धोदैः सर्वतः शुभम्।
समभ्युक्ष्यैव लिप्यैव तण्डुलानवकीरयेत्।।

कदलीक्रमुकुम्भाद्यैर्द्वारे द्वारे प्रतिप्रति।
वितानाद्यैर्विशेषेण भूषयेत्सर्वतः शुभम्।।

तद्ग्रामवासिनः सर्वेऽलंकृत्वाऽनन्यतत्पराः।
नैमित्तिकान् विना भक्त्या ध्यायेयुर्मनसा हरिम्।।

तद्ग्रामसीमन्यन्तस्था नित्यकर्मक्रियां विना।
नैमित्तिकानि काम्यानि तीर्थान्तं नाचरेद्बुधः।।

**प्र.२४.१७२ - १७४**

**क्रि.१४.३१, ३२**

प्रथमेऽहनि पूर्वाह्णे वीथीः सर्वत्र शोधयेत्।।

'अवधूत'मिति प्रोच्य मार्जन्या मार्जनं चरेत्।
अद्भिरभ्युक्षणं कुर्या 'दाशास्वि' ति च मन्त्रतः।।

## ७.८.३ उत्सवादौ भगवतः स्नपनपूर्वकमाराधनम्

**वि.५२.३४६**

ततो देवालयं प्रविश्य, देवं प्रणम्य, उत्सवबिम्बं देव्यौ च, तदलाभे स्नापनं, तदलाभे कौतुकं वाऽऽहृत्य, मध्याह्नार्चनान्ते स्नपनोक्तविधानेन यथाशक्तिकलशैः स्नापयित्वा, अथवा शुद्धोदकैरभिषिच्य, हविर्निवेदयेत्। तदालयगतदेवेभ्यः सर्वेभ्यः परिवारदेवेभ्यश्च यावत्तीर्थान्तं तावत् त्रिकालं द्विगुणं हविर्निवेदयेत्। परिवारदेवानां बिम्बाभावे तत्तत्पीठे तथैवाभ्यर्च्य, एककालं वा हविर्निवेदयेत्।

**स.५५.१९, २०**

**खि.३२.६१**

एतत्पूर्वं तु मध्याह्ने देवेशस्नपनं चरेत्।

य.४०.१५ - २६

आरम्भः स्नपनार्थं च पूर्वरात्रौ विशेषतः।
सायमर्चावसाने तु देवमादाय मण्डपे।।

विष्टरोपरि संस्थाप्य समभ्यर्च्याष्टविग्रहैः।
राजवन्मुखवासं च तैलं दद्याच्च पूर्ववत्।।

पूर्वोक्तं देवमादाय स्थापयेदासुरे पुनः।
शुद्धस्नानोक्तमार्गेण स्नापयेदव्ययं पुनः।।

योगासने समारोप्य नृत्तगेयावसानकम्।
आसनाद्यं समभ्यर्च्य हविः सम्यङ्निवेदयेत्।।

आलयाद्दक्षिणे पार्श्वे गोमयेनोपलिप्य च।
धान्योपरि प्रतिष्ठोक्तमण्डजादींत्समाहरेत्।।

संप्रोक्ष्यात्रैव देवेशं देवीभ्यां सह वा विना।
समारोप्य समभ्यर्च्य कौतुकं बन्धयेत्तथा।।

तथैव शाययित्वाऽत्र नृत्तगेयादिभिः सह।
ततादिवाद्यैः सर्वैश्च रात्रिशेषं नयेत्क्रमात्।।

प्रभाते देवमुद्बोध्य हविर्नैव समर्च्य च।
स्नपनोक्तप्रकारेण मध्याह्ने स्नपनं चरेत्।।

ततो हविर्निवेद्यैव स्थापयेद्यागमण्डपे।
अर्चास्थानेऽथवा धीमान् चक्राद्यैस्सह चाव्ययम्।।

कौतुकं यदि चेद्धीमान् प्रातरर्चावसानके।
देव्यौ नैव समादाय स्नापयेत्स्नपनं तु वा।।

संस्नाप्यैव समभ्यर्च्य हविः सम्यङ्निवेद्य च।
पश्चात्सन्ध्यार्चनार्थाय स्थापयेद्वेदिकोपरि।।

प्रथमेऽहनि सायाह्ने चक्रवीशामितैः सह।
संस्नाप्य च समभ्यर्च्य हविः सम्यङ्निवेदयेत्।।

**अ.२९**

उत्सवादिदिने सायमुत्सवार्थं तु पूजयेत्।।

आम्लेन शोधयेद्बिम्बं स्नापयेद्गन्धवारिणा।
प्लोतवस्त्राम्बरं चैव वस्त्रयुग्मं सुयोजयेत्।।

वस्त्रं मृदु नवं चैव कौशेयं तान्तवं हि वा।
हीनं च स्फुटितं दीर्घं पुराणं च विवर्जयेत्।।

चित्रकक्ष्यासमायुक्तं मुक्तादामसमायुतम्।
नानाभूषणसंयुक्तं नानारत्नसमायुतम्।।

गन्धैर्माल्यैरलंकृत्य धूपदीपसमायुतम्।
देवीभ्यां च समभ्यर्च्य चक्रादीनां तथा भवेत्।।

परिवारांस्तथा सर्वान् पूजां द्विगुणमाचरेत्।
तद्ग्रामे देवतास्सर्वा नित्यं च द्विगुणीकृतम्।।

**ज्ञा.१२.१७७**

अथ प्रदोषे यजमानो गुरुमभिपूज्य देवेशस्य विशेषपूजामुत्सवं च कारयेत्। देवेशं संस्नाप्य प्रभूतं हविः निवेद्य देवीभ्यामर्चकमुनिभ्यां गरुडचक्रविष्वक्से - नानामन्यपरिवारदेवानां च शक्तश्चेद्धविर्निवेदयेत्।

**क्रि.१४.३३, ३४**

**स.५५.३९ - ४१ ; खि.३२.८९, ९० ;**

**वा.३२**

अधमोत्तममार्गेण स्नपनं सम्यगाचरेत्।।

देवं देव्यौ सहादाय श्वेतवस्त्रैरलङ्कृतम्।
कुण्डलाङ्गदहाराद्यैर्भूषणैरपि भूषयेत्।।

श्वेतमाल्यैरलङ्कृत्य श्वेतगन्धानुलेपनैः।
पवित्रं चोत्तरीयं च दत्वा देवं प्रणम्य च।।

राजवच्चोपचारादीन् आचरेद्देशिकोत्तमः।
प्राण्यङ्गजादिभिर्गन्धैर्वजयित्वा समाहितः।।

अन्यभोगं यथान्यायं कृत्वा तद्देशिकोत्तमः।

## ७.८.४ यागशालायां कुम्भवेद्यादिकल्पनम्

**वि.५३.३४८**

[1]पश्चादालयाभिमुखे दक्षिणे आग्नेय्यां वा यागशालां षोडशस्तम्भसंयुक्तां पञ्चहस्तादहीनां चतुर्द्वारयुतां एकद्वारयुतां वा मण्टपं कूटं वा कारयति। तां तोरणपूर्णकुम्भवितानध्वजदर्भमालाद्यैरलङ्कृत्य, तन्मध्ये अष्टतालाऽऽयतविस्तारां चतुरश्रां द्वितालोत्सेधां कुम्भवेदिं च कृत्वा, तत्प्राच्यां [2]पूर्ववत्सभ्याग्निकुण्डं कृत्वा, उपलिप्य, पैष्ट्या भूमिमलङ्कृत्य

**खि.३२. पृ.४२९**

1. पश्चात् - मृत्सङ्ग्रहणानन्तरम्।
2. पूर्ववत् - अग्निकुण्डोक्तलक्षणानुसारम्।

**वा.३२**

यागशालामलङ्कृत्य आग्नेये दक्षिणेऽपि वा।।

---------------------------------------

उत्तरे च तथा पूर्वे यज्ञशालां प्रकल्पयेत्।।

प्रतिष्ठोक्तविधानेन वेदिं कृत्वा सलक्षणम्।

**य.४०.३६ - ४२**

चक्रादीनभिषिच्यैव हविः सम्यङ्निवेद्य च।
स्वे स्वे स्थाने सुसंस्थाप्य यागं पश्चात्समारभेत्।।

आलयाभिमुखे वाऽथ दक्षिणे वा मनोरमे।
यमपावकयोर्मध्ये पावकांशेऽथवा चरेत्।।

ऐशान्यां वाथवा केचित्सोमेशानान्तरेऽथवा।
कल्पयेद्यागशालां च प्रतिष्ठोक्तेन मार्गतः।।

वेदिं तन्मध्यमे पङ्क्तौ पङ्क्तिमानेन कारयेत्।
उत्सवाद्यर्थमात्रं वा रत्निमात्रोदयं क्रमात्।।

पञ्चाग्नीन् कल्पयेद्धीमानुत्तमे चोत्सवे तथा।
त्रेताग्नीन् कल्पयेद्विद्वान् मध्यमे चोत्सवे क्रमात्।।

अधमं यदि चेत्सभ्यं कल्पयेत्पूर्ववत्सुधीः।
त्रेताग्निकल्पनं यत्र प्रधानं गार्हपत्यकम्।।

उभयोरन्ययोस्सभ्यं प्रधानं चाऽचरेत्तथा।

भूमियज्ञेन सर्वत्र शोधयेच्च यथाविधि।।

**प्र.२५.४३ - ४९ ; नि.३० ; वा.३२**

**क्रि.१४.३७ - ४१**

प्रदोषे समनुप्राप्ते दक्षिणेऽभिमुखेऽथवा।
यागशालां प्रकल्प्यैव षोडशस्तम्भसंयुताम्।।

मध्ये वेदिं प्रकल्प्यैव पञ्चाग्नीन् [1]उत्तमेऽथवा।
त्रेताग्नीन् [2]मध्यमे कुर्यात् सभ्यमेवाधमे[3] तथा।।

अग्निराहवनीयः स्यात् प्रधानो मध्यमे भवेत्।
अन्ययोः सभ्य एव स्यात् नित्यहोमेऽथवा भवेत्।।

होमस्थाने त्वनिर्दिष्टे निर्दिष्टे स्थानसङ्कटे।
अशक्तस्त्वरितो वाऽथ निर्दिष्टे स्थानकल्पने।।

कर्मणामपि सर्वेषां कल्पयेत्पचनालये।

**नि.३०**

**अ. २९**

याज्ञिकैर्दारुमादाय तोरणानि च कारयेत्।।

मण्डपस्य चतुर्दिक्षु तत्तद्द्वारस्य मानतः।
गोपुरद्वारमानं स्यात् तोरणद्वारमानतः।।

प्रासादस्योत्तरतः प्रपां कृत्वाऽतिसुन्दराम्।
प्रासादस्याग्रतो वापि दक्षिणे चोत्तरेपि वा।।

---

1. उत्तमे - उत्तमकल्पोत्सवे।
2. मध्यमे - मध्यमकल्पोत्सवे।
3. अधमे - अधमकल्पोत्सवे।

आस्थानमण्डपं कृत्वा सर्वालङ्कारसंयुतम्।
द्वितीयावरणे कुर्यात् होमस्थानं प्रकल्पयेत्।।

यमपावकयोर्मध्ये मण्डपादीन् प्रकल्पयेत्।
पञ्च सप्त नवैर्वापि हस्तविस्तीर्ण उच्यते।।

यथा मार्गमलङ्कारं तथा मार्गं च कारयेत्।

## ७.८.५ यागशालारक्षणार्थक्रिया

**वा.३२**

पश्चाद्देवं समानीय आस्थाने सम्यगर्चयेत्।
यागशालाभिरक्षार्थं चक्रं गरुडमेव च।।

सेनाधीशं च अभ्यर्च्य पञ्चायुधसमन्वितम्।
तत्तत्काले समभ्यर्च्य तत्तद्धोमं समाचरेत्।।

हौत्रादींश्च बलिं क्षिप्त्वा अजस्रं दीपमाचरेत्।

## ७.८.६ वेद्यां नवकुम्भसमारोपणम्

**वि.५३.३४८, ३४९**

वेद्यां द्व्यङ्गुलोत्सेधानि अङ्गुलोत्सेधानि वा धान्यान्यास्तीर्य, नवभागं विभज्य, पुष्पदर्भाक्षतान् अवकीर्य दीपाङ्कुराष्टमङ्गुलपञ्चायुधानि परितो विन्यस्य खण्डस्फुटितकालरहितान् नवान् नवकुम्भान् समाहृत्य, एकं द्रोणद्वयपूर्णं प्रधानकुम्भं, अन्यान् द्रोणपूर्णान् सङ्गृह्य, 'इन्द्रं नरो न', इति तन्तुना यवान्तरमङ्गुल्यन्तरं वा परिवेष्टय, 'शुची वो हव्या', इति प्रक्षाल्य, नादेयं

तोयं दिवा सङ्गृह्य 'धारास्वि'ति वस्त्रेणोत्पूय उशीरादिगन्धैर्वासयित्वा, 'इदमापः शिवा'इति कुम्भान् सम्पूर्य, अक्षतं कूर्चं च निक्षिप्य, पृथक् पृथग्वस्त्र-युग्मेनाऽऽवेष्ट्य, नवरत्नानि विष्णुगायत्र्या मध्यादि कुम्भेषु संन्यस्य, रत्नालाभे सुवर्णं निक्षिप्य, प्रधानकुम्भे पञ्चायुधानि च सौवर्णानि निक्षिप्य तत्क्रमेण वेद्यां विष्णुसूक्तेन कुम्भान् समारोप्य, तान् पिधानैरपिधाय --------।

**क्रि.१४.४३ - ४५ ; य.४०.४३ - ४७ ;**

**प्र.२५.५४ - ५८**

**वा.३२**

सर्वालङ्कारसंयुक्तं द्वारकुम्भादि संन्यसेत्।।

वस्त्राभ्यां कण्ठमावेष्ट्य कुम्भं तत्र समाचरेत्।
नवरत्नं सुवर्णं वा कूर्चयुक्तं तु निक्षिपेत्।।

ध्रुवाग्रे स्थापयेत्कुम्भं देवदेवं समाह्वयेत्।
कुम्भं चोत्सवबिम्बं च संन्यसेत् क्रमतस्ततः।।

मध्याद्यैन्द्रादि सोमान्तं स्थापयेत विचक्षणः।
ऐशान्यान्तं पुनस्स्थाप्य आग्नेयादिषु कोणके।।

### ७.८.७ नवकुम्भेषु देवताराधनम्

**प्र.२५.५९ - ९४**

वेद्यामधस्तात्पूर्वे तु वीशं वै पश्चिमामुखम्।
सन्न्यस्य दक्षिणे पश्चाच्चक्रं चैवोत्तरामुखम्।।

पङ्क्तीशं प्राङ्मुखं पश्चात्पश्चिमे चोत्तरेऽथवा।
दक्षिणाऽभिमुखं शान्तं स्थण्डिलोपरि सन्न्यसेत्।।

अभावे गरुडादीनां स्थाने तत्र च तत्र च।
कुम्भांत्सन्न्यस्य तन्मध्ये ध्यात्वैवाऽवाहयेत् क्रमात्।।

यावत्तीर्थाऽवसानं स्यात्तावत्कुम्भे तु पार्षदान्।
सायं प्रातर्विशेषेण पूजयेद्विधिवत्सुधीः।।

पश्चात्सभ्याऽग्निकुण्डे तु विधिनाऽघारमाचरेत्।
उत्तराभिमुखस्तिष्ठन् गुरुर्वेद्यास्तु दक्षिणे।।

प्राणायामं ततः कृत्वा पूर्ववद्ध्यानमाचरेत्।
प्रधानकुम्भमध्ये तु विष्णुं देव्यौ च सान्वयौ।।

ध्रुवादावाहयेन्मन्त्री प्रागादिषु यथाक्रमम्।
पुरुषं कपिलं सत्यं यज्ञमच्युतमेव च।।

नारायणं चानिरुद्धं ततः पुण्यं समर्चयेत्।
तं रुक्तवर्णं रक्तास्यं रक्तनेत्रं सुखोद्वहम्।।

किरीटहारकेयूरलम्बयज्ञोपवीतिनम्।
कौस्तुभोद्भासितोरस्कं श्रीवत्साङ्कं चतुर्भुजम्।।

दक्षिणेनैकहस्तेन भक्तानामभयप्रदम्।
वामेनाप्यन्यहस्तेन स्वकट्यामवलम्बितम्।।

पराभ्यां तु कराभ्यां तु शङ्खचक्रधरं परम्।
शुकपिञ्छाम्बरधरं विष्णुं प्रणवरूपिणम्।।

तप्तहाटकसङ्काशां पद्मपत्रायतेक्षणाम्।

तिसृभिः पुष्पचुडाभिः ललाटोपरि शोभिताम्।।

सपद्मवामहस्तां तां कक्ष्याबद्धघनस्तनीम्।
प्रसारितेतरकरप्रसन्नेन्दुनिभाननाम्।।

श्रीवत्साङ्किबीजां तां फाल्गुने चोत्तरोद्भवाम्।
विष्णोर्दक्षिणपार्श्वस्थां हंसनिर्याख्यवाहिनीम्।।

वामभागे महीं श्यामां सर्वाभरणभूषिताम्।
वैशाखे रेवतीजातां दधतीं दक्षिणेऽम्बुजम्।।

प्रसारितेतरकरां प्रसन्नेन्दुनिभाननाम्।
महाचातकमारूढां लक्ष्मीपूर्वाक्षरान्विताम्।।

पुरुषः प्राङ्मुखोऽच्छाभः पीतवासाश्चतुर्भुजः।
शङ्खचक्रधरः श्रीमान् सर्वाभरणभूषितः।।

वरदोऽभयदः प्राच्यां श्रीभूमिसहितो हरिः।
कपिलः प्राङ्मुखोऽच्छाभः रक्तवस्त्रोऽष्टबाहुयुक्।।

दक्षिणेनैकहस्तेन भक्तानामभयप्रदः।
अन्यैः चक्रासिहलभृत्सर्वाभरणभूषितः।।

वामेनाप्यन्यहस्तेन स्वकट्यामवलम्ब्य च।
अन्यैश्शङ्खधनुर्दण्डधरः सुन्दरविग्रहः।।

आग्नेय्यां दिशि गायत्र्या सावित्र्या च युतो हरिः।
सत्यो याम्यमुखः श्रीमान् अञ्जनाभश्चतुर्भुजः।।

शङ्खचक्रधरः सौम्यः सर्वाभरणभूषितः।
वरदोऽभयदः साधू रक्तवासा महाहनुः।।

देवीभ्यां धृतिपौष्णीभ्यां युतो याम्यदिशि प्रभुः।
यज्ञः पश्चिमदिग्वक्त्रः तप्तचामीकरप्रभः।।

सप्तहस्तचतुः शृङ्गो रक्तवासा द्विशीर्षकः।
शङ्खचक्राज्यपात्रस्रुक्स्रुवानुपभृतं जुहूम्।।

बिभ्रत् त्रिपादो नैऋत्यां देवः स्वाहास्वधायुतः।
अच्युतः पश्चिमाशास्यः कनकाभश्चतुर्भुजः।।

शङ्खचक्रधरः श्रीमान् सर्वाभरणभूषितः।
वरदोऽभयदः साक्षी सर्वकर्मफलप्रदः।।

युक्तः पवित्रीक्षोणीभ्यां प्रतीच्यां श्यामलाम्बरः।
नारायणः पश्चिमास्यः स्फटिकाभश्चतुर्भुजः।।

शङ्खचक्रधरः श्रीमान् सर्वाभरणभूषितः।
वरदोऽभयदः श्यामाम्बरः श्रीवत्सचिह्नितः।।

संयुतः कमलेलाभ्यां वायव्यां जगतां पतिः।
अनिरुद्ध उदीच्यास्यः प्रवालाभश्चतुर्भुजः।।

अनन्तोत्सङ्ग आसीनः पुष्पाम्बरधरो हरिः।
शङ्खचक्रधरः श्रीमान् सर्वाभरणभूषितः।।

दधत्स्वदक्षिणे वामे प्रमोदादायिनीं महीम्।

वरदोऽभयदो देव उदीच्यां सर्वसिद्धिदः।।

पुण्यः प्रागाननः श्रीमान् तरुणादित्यसन्निभः।
श्रीवत्सवक्षा नित्यश्रीः सर्वाभरणभूषितः।।

चतुर्भुजश्शङ्खचक्रवरदाभयचिह्नितः।
श्वेतवस्त्रोत्तरीयोपवीताद्यैस्समलङ्कृतः।।

इन्दिराधरणीनाथ ईशान्यां पुण्यपूरुषः।
एतान् देवान् समावाह्य समभ्यर्च्याष्टविग्रहैः।।

वीशानपायिपङ्क्तीशशान्तान् दिक्ष्वर्चयेत्क्रमात्।
सायं प्रातर्विना कुम्भैः देवं वीशामितैस्सह।।

वेद्यामेव प्रतिष्ठाप्य पूजयेदिति केचन।
होता पश्चात्प्रधानाग्नौ हौत्रशंसनमाचरेत्।।

**य.४०.४८ - ५७**

**प्र.२५.९६ - ९९**

वेद्यास्तु पश्चिमे वाथ वायव्यां वा विशेषतः।।

स्थण्डिलं कल्पयित्वात्र चास्तरेदण्डजादिकान्।
यजमानसमायुक्तो गुरुर्देवं प्रणम्य च।।

कुसुमाञ्जलिमुत्सृज्य 'प्रतद्विष्णु'रिति ब्रुवन्।
देवीभ्यां सह देवेशम् आदाय स्थण्डिलोपरि।।

प्राङ्मुखं चैव संस्थाप्य पूजयेदष्टविग्रहैः।

**वि.५३.३४९, ३५०**

सभ्याग्निकुण्डे त्वाघारं हुत्वा, आचार्यस्तद्वेद्यां दक्षिणे चोत्तराभिमुखस्तिष्ठन् प्राणायामं कृत्वा, समाहितो देवं ध्यायन्, तन्मध्ये प्रधानकुम्भे देवेशं विष्णुं देव्यौ च, प्राच्यां पुरुषं दक्षिणस्यां सत्यं, प्रतीच्यामच्युतम्, उदीच्यामनिरुद्धम्, आग्नेय्यां कपिलं, नैरृत्यां यज्ञं, वायव्यां नारायणम् ऐशान्यां पुण्यं च समावाह्य, पाद्याद्यैरभ्यर्च्य, अग्निं प्रज्वाल्य ----कुम्भस्थान् देवान् एकादशोपचारैर्वा अभ्यर्च्य, द्विकालं हविर्निवेदयेत्। एकादशोपचारैरष्टोपचारैर्वा अभ्यर्च्य

**वा.३२;        खि. ३२. १२७**

**क्रि.१४.४७ - ५१**

यागशालां समासाद्य 'जातवेदस' इत्यथ।।

प्रणीय तेषु नित्याग्निं कुण्डेष्वाघारमाचरेत्।<br>
वेद्यां धान्यं समास्तीर्य कुम्भानारोप्य तत्र वै।।

ध्रुवादावाहयेत्तेषु दीपाद्दीपमिव क्रमात्।<br>
मध्ये कुम्भं तथा विष्णुं प्रागादि पुरुषादिकान्।।

आग्नेयादि तथाऽऽवाह्य कपिलादीन् यथाविधि।<br>
सप्तविंशतिभेदैश्च समभ्यर्च्य प्रणम्य च।।<br>
वीशानपायिपङ्क्तीशशान्तान् दिक्ष्वर्चयेत् क्रमात्।

### ७.८.८ नवकुम्भदेवार्चने विकल्पः

**क्रि.१४.५१, ५२**

सायं प्रातर्विना कुम्भैः देवं वीशामितैस्सह।।

वेद्यामेव प्रतिष्ठाप्य पूजयेदिति केचन।

### ७.८.९ कुम्भेषु विष्णवाद्यावाहनानन्तरं होमः

**वा.३२**

पश्चादास्थानदेवाग्रे स्थण्डिलं प्रति कल्पयेत्।।
आघारं विधिवद्धुत्वा वैष्णवं च सुहूयताम्।
पश्चाद्धौत्रं प्रशंस्यैव आवाहनमथाचरेत्।।

जुष्टाकारं च पूर्वोक्तं हुत्वा चैव यथाविधि।
तत्र प्रतिसरं बध्वा पूर्वोक्तेनैव कारयेत्।।

अग्निं प्रज्वाल्य तत्काले वैष्णवं च यथोचितम्।
श्रीभूसूक्तसमायुक्तं हुत्वा देवमनुस्सरन्।।

**य.४०.५२, ५७**

प्रतिष्ठोक्तविधानेन आघारावाहने च वै।
जुष्टाकारं च कृत्वैव स्वाहाकारं च कारयेत्।।

होमक्रमं निरुक्तोक्तं मध्यमोत्तमयोरपि।
तथैव कारयेद्विद्वान् अस्य मार्गः प्रवक्ष्यते।।

उत्तराभिमुखस्तिष्ठन् वेद्यास्तद्दक्षिणे गुरुः।

प्राणायामं च कृत्वाऽत्र प्रतिष्ठोक्तध्यानमारभेत्।।

प्रधानकुम्भमध्ये तु विष्णुं दैव्यौ च पार्षदान्।
ध्रुवादावाहयेन्मन्त्री प्रागादिषु यथाक्रमम्।।

पुरुषं कपिलं सत्यं यज्ञमच्युतमेव च।
नारायणं ततः पश्चादनिरुद्धं पुण्यमेव च।।

प्रागाद्यं च समावाह्य समभ्यर्च्याष्टविग्रहैः।
परिषिच्य पावकं पश्चाद्वैष्णवं जुहुयात्क्रमात्।।

**प्र.२५.९४, ९५**

होता [1]पश्चात् प्रधानाग्नौ हौत्रशंसनमाचरेत्।
प्रतिष्ठोक्तक्रमेणैव तदालयगतान् सुरान्।।

आवाह्य तत्क्रमेणैव निरुप्याज्याहुतीर्यजेत्।
परिषिच्य पावकं पश्चात् वैष्णवं जुहुयात्क्रमात्।।

**क्रि.१४.५२, ५३**

## ७.८.१० उत्सवे तत्तद्बिम्बाभावे प्रतिनिधिः

**य.४०.६१ - ७२**

उत्सवप्रतिमाभावे स्नापने वा विशेषतः।
स्नापनस्याप्यभावे तु कौतुके वा चरेत्तु वा।।

कौतुके यदि चेद्देव्यौ नैवाऽदाय तथा चरेत्।

---

1. पश्चात् - नवकुम्भारोपणान्तरम्।

नाचरेन्नित्यवैकल्यं विसर्गावाहने तथा।।
आचरेदुत्सवं विद्वान् नित्यार्चां वा यथाक्रमात्।
अस्ति चेन्नित्यवैकल्यं सर्वनाशो भवेद्ध्रुवम्।।

स्नापने यदि चेद्विद्वान्मध्यमे चोत्सवस्य तु।
स्नपने यदि सम्प्राप्ते कौतुके स्नपनं चरेत्।।

स्नपनप्रतिमाभावे स्नपनं यदि चोत्सवे।
(आचरेत्तत्प्रवृत्तेन्यमौत्सवोत्तममध्यमे।।)

सम्भवेत्स्नपनं ? चात्र कौतुके चोत्सवं विना।
आचरेत्कर्मसाङ्कार्यं नाचरेदुभयोर्बुधः।।

उत्सवे वर्तमाने तु कौतुके स्नपनं यदि।
सम्भवेदुक्तकाले तु क्रमात्कर्माणि वाऽऽचरेत्।।

पुराप्रवृत्तकार्यस्य नास्ति दोषोऽत्र केचन।
कौतुकं चेद्यथैकाग्नौ बहुकर्माणिवच्चरेत्।।

गृहे त्रेताग्निवन्नित्यं प्रणीयारोपणं विना।
स्नापनोत्सवबेरौ तु कौतुकेन दिनं प्रति।।

आरोपणं यदि भवेद्ध्रुवे तत्कर्मपूर्वतः।
आवाह्य कर्मणामन्ते तथा सायं विसर्जयेत्।।

प्रातरावाहनं नित्यमर्चनादौ विशेषतः।
विसर्ज्यं सायमर्चान्ते कौतुके हि यथा तथा।।

तथा चोत्सवदीक्षादौ समावाह्य ध्रुवात्सुधीः।

विसर्गं नाचरेन्मध्ये तीर्थान्ते तं समाचरेत्।।

**प्र.२५.९९ - ११०**

**नि.२९**

उत्सवबेरहीनं चेत् कौतुके चोत्सवं चरेत्।।

कौतुके कारयेद्यस्तु प्रातस्सन्ध्यावसानके।
प्रतिसर्यादीनि ? सर्वाणि सम्यभाव तु ? कारयेत्।।

रात्रौ प्रतिसरं बद्ध्वा चक्रं चैव तु कारयेत्।

**ज्ञा.९२.१७८**

### ७.८.११ चक्रादिबिम्बाभावे प्रतिनिधिः

**प्र.२७.४०३ - ४०५**

चक्रवीशामितादीनां बिम्बाभावे पृथक् पृथक्।।

तण्डुलोपरि पात्रेषु कूर्चेष्वावाह्य मन्त्रतः।
तत्तद्रूपं तु संस्मृत्य समभ्यर्च्य विधानतः।।

हुत्वा च तत्तद्दैवत्यं पश्चादुत्सवमाचरेत्।

### ७.८.१२ उत्सवबेरादीनां प्रतिसरबन्धनम्

**वि.५३.३४९**

[1]पश्चादौत्सवं बिम्बमासाद्य, अष्टोपचारैरभ्यर्च्य, पुण्याहं वाचयित्वा, हेमादिपात्रे तण्डुलोपरि न्यस्तं सौवर्णं तान्तवं प्रतिसरं [2]पूर्ववद् बध्वा,

**य.४०.७४, ७५ ; क्रि.१४.४७ ; नि.३०**

1. पश्चात् - नवमूर्त्यावाहनोत्तर अग्निप्रज्वालनान्तरम्।

2. पूर्ववत् - प्रतिसरबन्धोक्तविधानानुसारम्।

**प्र.२५.१११, ११२**

अर्चनान्ते विशेषेण पुण्याहमपि वाचयेत्।
हेमपात्रे तु सौवर्णं कौतुकं तण्डुलोपरि।।

सन्न्यस्य पूर्ववत् धीमान् बन्धयेद्दक्षिणे करे।
कुम्भान् देव्यौ च चक्रादीन् समाबध्य समर्चयेत्।।

**खि.३२.१२१ - १२६**

स्वर्णादि पात्रे द्विप्रस्थतण्डुलान् न्यस्य तत्र च।।

नारिकेलं तदुपरि सौवर्णं कौतुकं न्यसेत्।
तस्मिन् शेषं समावाह्य स्वस्तिसूक्तं तथा बुधः।।

'कृणुष्व पाज' सूक्तं च जप्त्वाऽलङ्कारसंयुतः।
आचार्यो यजमानश्च सर्ववाद्यसमायुतः।।

घण्टानादेन च तथा कृत्वा सद्मप्रदक्षिणम्।
उद्दिष्टस्थानमावेश्य देवेशं सम्प्रणम्य च।।

अथवा मण्डपे स्थाप्य प्रणम्य च यथाविधि।
देवस्य दक्षिणे हस्ते देव्योर्वामकरे तथा।।

गरुत्मदमितारीणां गुरोश्चैव पदार्थिनाम्।
बध्नीयाद्दक्षिणकरे रक्षासूत्रं समन्त्रकम्।।

## ७.८.१२ सप्रतिसरबन्धस्य देवस्य हविर्निषेधः

**वि.५३.३४९**

यस्य देवस्य यजनार्थं प्रतिसरबन्धः कृतः, तस्य हविः प्रतिषिद्धं

तस्माद्रात्रावुत्सवान्ते स्नानकाले प्रतिसरं विमोच्य स्नापयित्वा, अभ्यर्च्य, हविर्निवेदयेत्।

**नि.२९**

## ७.८.१३ उत्सवबेराभावे कौतुके सद्यः प्रतिसरबन्धनम्

**क्रि.२६.१४५ - १४६**

उत्सवं चौत्सवाभावे कौतुके कारयेद्यदि।
प्रातस्सन्ध्यार्चनान्ते तु सद्यः कौतुकबन्धनम्।।

कृतोत्सवं च तीर्थं च सद्य एव समाचरेत्।

## ७.८.१४ [1]देव्युत्सवे विशेषः

**क्रि.२६.१८० - १८५**

[2]स्वप्रधानं यदि भवेत् उत्सवस्य विधिक्रमे।
विशेषमत्र वक्ष्यामि शृणुध्वं मुनिसत्तमाः।।

यागशालामलङ्कुर्यात् मध्ये वेदिं च कारयेत्।
एकं कुम्भं च सन्न्यस्य तत्पूर्वे गरुडं तथा।।

दक्षिणे वाहनं चापि ? पश्चिमे चक्रमेव च।

---

1. इदं सार्धं श्लोकपञ्चकं देव्युत्सव विषय एव स्यादित्यालोच्यते। प्रकरणं विच्छिन्नं। अथापि लिंगादेवमतुमीयते।

2. देवीप्रधानमित्यर्थः स्याद्वा

उत्तरे विष्वक्सेनञ्च कल्पयित्वा विधानतः।।

कुम्भे तथैव देव्यौ च समावाह्य समर्च्य च।
परिवारपीठे तद्देवान् समभ्यर्चेद्यथाविधि।।

एवमेव विधानेन सायं प्रातर्दिने दिने।
कुम्भवेद्यां तु तत्प्राच्यां तत्तदग्निं प्रकल्पयेत्।।

एष एव विशेषः स्यात् अन्यत्सर्वं खिलोक्तवत्।

★★★

## ९. उत्सवाङ्गहोमाः

### ७.९.१ उत्सवे पञ्चाग्निहोमस्य उत्तमत्वम्

**अ.२९**

उत्सवे चोत्तमे तत्र पञ्चाग्नीन् साधयेत्क्रमात्।।

### ७.९.२ पौण्डरीकश्रामणकाग्न्योः होमे मध्यमत्वम्

**अ.२९**

मध्यमं चोत्सवं स्याच्चेत् पौण्डरीकाग्निमाचरेत्।
श्रामणाग्निं च कृत्वा तु ------------------ ।।

### ७.९.३ औपासनाग्नौ होमे अधमत्वम्

**अ.२९**

--------------- [1]अन्ये चौपासनं भवेत्।।

### ७.९.४ उत्तमादिभेदभिन्नेषु उत्सवेषु होमे नियमः

**क्रि.१४.८०  - ८२**

आज्येन साज्यचरुणा समिद्भिश्चोत्तमे हुनेत्।
आज्येन साज्यचरुणा मध्यमे होममाचरेत्।।
आज्येनैवाधमे होमं साज्येन चारुणाऽथवा।

आज्येन वाथ चरुणा सायं प्रातर्यजेद् बुधः।।

प्रथमोत्सवमारभ्य तीर्थान्तं जुहुयात्क्रमात्।
विना कुम्भैश्च देवैश्च नित्याग्नौ होममाचरेत्।।

### ७.९.५ होमकालस्यानिर्देशे कालविधानम्

**क्रि.१४.४२**

कालेऽनुक्ते तु मध्याह्नः -------------।।

### ७.९.६ उत्सवे अग्निकुण्डानिर्देशे कुण्डविधानम्

**क्रि.१४.४१**

अग्निकुण्डे त्वनिर्दिष्टे कुण्डमौपासनं चरेत्।।

### ७.९.७ होमद्रव्यानिर्देशे द्रव्यविधानम्

**क्रि.१४.४२**

होमद्रव्ये त्वनिर्दिष्टे गव्यं घृतमुदाहृतम्।

### ७.९.८ उत्सवाङ्गहोमे आज्यालाभे प्रतिनिधिः

**वि.५३.३५०**

आज्यालाभे आज्यमिश्रचरुणा होतव्यम्।

### ७.९.९ होमपात्रस्यानिर्देशे स्रुवविधानम्

**क्रि.१४.४२**

------------ पात्रेऽनुक्ते स्रुवं भवेत्।।

### ७.९.१० होमस्थानस्यानिर्देशे स्थानविधानम्

**क्रि.१४.४०, ४१**

होमस्थाने त्वनिर्दिष्टे निर्दिष्टस्थानसङ्कटे।
अशक्तस्त्वरितो वाथ निर्दिष्टस्थानकल्पने।।

कर्मणामपि सर्वेषां कल्पयेत् पचनालये।

### ७.९.११ देवताभेदेन द्रव्यहोमपात्रयोः भेदः

**वि.५३.३४९, ३५०**

उत्सवाधिदैवत्यं स्रुवेणाज्येन, तिथिदैवत्यमुपभृता साज्येन पक्केन, वारदैवत्यमाज्येन अग्निहोत्रहवण्या, नक्षत्रदेवत्यमाज्येन जुहुयात्।

सर्वालाभे तत्तत्स्मृत्वा स्रुवेण होतव्यम्। यावत्संख्याहुतिः तावत्समिद्धोमं चरुहोमं च कुर्यात्। --------------- दधिक्षीराज्यमिश्रं लाजमुपजुह्वाऽऽदाय वैष्णवेन जुहुयात्।

### ७.९.१२ नवाहोत्सवे होमे दिनभेदेन समिद्भेदः

**वि.५३.३५०**

प्रथमदिने पलाशं, द्वितीये बैल्वं, तृतीये शमीं, चतुर्थे नैयग्रोधं, पञ्चमे औदुम्बरं, षष्ठे चाश्वत्थं, सप्तमे खादिरं, अष्टमे प्लाक्षं, नवमे पालाशम्, इध्मं जुहुयात्। एतेषामलाभे पालाशमश्वत्थं वा जुहुयात्।

### ७.९.१३ नवाहोत्सवे अर्चनादौ दिनभेदेन पुष्पभेदः

**वि.५३.३५०**

देवस्य द्विगुणार्चनार्थं, कुम्भदेवाराधनार्थं, होमार्थं, आस्थानार्चनार्थं, बलिदानार्थं च, प्रथमदिने पद्मं, द्वितीये बिल्वपत्रं, तृतीये करवीरं, चतुर्थे कुमुदं, पञ्चमे

नन्द्यावर्त्तं, षष्ठे तुलसीं, सप्तमे स्थलारविन्दम्, अष्टमे विष्णुक्रान्तं, नवमे पङ्कजम्, एतेषामलाभे करवीरं, तुलसीं वा आहरेत्।

**वा. ३२**

### ७.९.१४ एकविंशतिदिनोत्सवे प्रत्यहं समिद्विशेषाः

**क्रि.१४.७३ - ७९**

प्रथमेऽहनि पालाशं द्वितीये बैल्वमेव च।
तृतीये तु शमी चैव न्यग्रोधं तु चतुर्थके।।

औदुम्बरं पञ्चमे च षष्ठे चाश्वत्थमेव च।
सप्तमे खादिरं प्रोक्तम् अष्टमे प्लाक्षमुच्यते।।

अपामार्गं तु नवमे दशमे चाम्रमेव च।
एकादश्यां कुशं चैव द्वादश्यां दौर्वमेव च।।

त्रयोदशे चामलकं पाटलं च चतुर्दशे।
पनसं पञ्चदशके कोविदारं तु षोडशे।।

सप्तदशे तु पुन्नागं समिद्भिरिति हूयते।
अष्टादशे तु मन्दारं वकुलमेकोनविंशके।।

चम्पकं विंशतितमे जुहुयाच्च यथाक्रमम्।
एकविंशतिके चैव कापित्थं जुहुयात् क्रमात्।।

इत्येतैश्च समिद्भिश्च क्रमेण जुहुयाद् बुधः।

**प्र.२५.१३७, १३८**

पलाशबिल्वशामीलन्यग्रोधोदुम्बरास्तथा।।

अश्वत्थखदिरप्लक्षब्रह्मवृक्षाः क्रमादिमे।
समिधां ग्राह्यवृक्षास्तु पर्णमश्वत्थमेव वा।।

**वा.३२**

## ७.९.१५ होमे निर्दिष्टसमिदलाभे प्रतिनिधिः

**वा.३२**

अलाभे तु समित्सर्वं लब्धं वापि च कारयेत्।।

काश्यपीयोक्तमार्गेण कारयेदिति शासनम्।

## ७.९.१६ उत्सवदिनेषु नित्यहोमक्रमः

**प्र.२५.११३ - १२०**

परिषिच्य पावकं पश्चात् वैष्णवं विष्णुसूक्तकम्।
जुहुयात्पौरुषं सूक्तं श्रीभूसूक्तसमन्वितम्।।

दिनसन्ध्याधिदैवत्यं तिथिवारर्क्षदैवतम्।
तथा मासाधिदैवत्यं अब्ददैवत्यमेव च।।

तदालयगतानां च जुहुयान्मूर्तिभिः क्रमात्।
व्याहृत्यन्तं प्रधाने स्यात् तत आहवनीयके।।

नृसूक्तं दक्षिणाग्नौ च वैष्णवं विष्णुसूक्तकम्।
गार्हपत्ये तु जुहुयात् श्रीसूक्तं वैष्णवं तथा।।

आवसथ्ये महीसूक्तम् एकाक्षरमतो यजेत्।
जुहुयात्पौण्डरीकाग्नौ 'अतो देवादि' वैष्णवम्।।

विष्णुसूक्तं पुरुषसूक्तं यद्देवादिसमन्वितम्।

पारमात्मिकमन्त्रांश्च ब्राह्ममैन्द्रं च वारुणम्।।

जुहुयाद्विष्णुगायत्र्या श्वेताब्जं च घृताप्लुतम्।
अष्टोत्तरशतं चैव सर्वदोषोपशान्तये।।

एकाग्निमथवाऽऽधाय जुहुयादधमाधमम्।
सभ्यहोमं च पूर्वोक्तम् वैष्णवादि विधानतः।।

### ७.९.१७ मूर्तिहोमः

**वि.५३.३४९, ३५६**

पश्चाद्यज्ञशालामागत्य, अग्निं प्रज्वाल्य, परिषिच्य, हौत्रं प्रशंस्य, अतो देवाद्यैः विष्णोर्नुकाद्यैः सहस्रशीर्षाद्यैः देवादितदालयगतपरिषद्देवानां मूर्तिमन्त्रैश्च हुत्वा, उत्सवाधिदैवत्यं तिथिवारनक्षत्रदैवत्यं च, क्रमाज्जुहुयात्। --------------- वैष्णवं विष्णुसूक्तं पुरुषसूक्तं तदालयगतपरिषद्देवानां मूर्तिमन्त्रांश्च आज्यमिश्रचरुणा वैष्णवान्तं सायं प्रातर्जुहोति।

**खि.३२.९१, ९२ ; वा.३२ ; य.४०.७५, ७६**

**स.५५.४२ - ४४**

अग्निं तं परिषिच्यैव मूर्तिहोमश्च हूयताम्।।

वैष्णवं विष्णुसूक्तं च पुरुषसूक्तं तथैव च।
देवस्य मूर्तिमन्त्रैश्च देव्योर्मुन्योस्तथैव च।।

सर्वेषां परिवाराणां मूर्तिमन्त्रैश्च हूयताम्।

**क्रि.१४.६८ - ७३**

वैष्णवं विष्णुसूक्तं च नरसूक्तं यजेद् बुधः।
श्रीभूसूक्तं ततो हुत्वा महीसूक्तं यजेत् क्रमात्।।

मूर्तिहोमं च जुहुयात् नित्यमेवं क्रमं विदुः।
वैष्णवं विष्णुसूक्तं च नरसूक्तसमन्वितम्।।

दिनसन्ध्यादिदैवत्यं तिथिवारर्क्षदैवतम्।

------------------------------------

समिद्भिर्जुहुयात् सभ्ये साज्येन चरुणा बुधः।
जुहुयात् पौरुषं सूक्तमैन्द्रमाहवनीयके।।

अन्वाहार्ये विष्णुसूक्तं श्रीसूक्तेन समन्वितम्।
वैष्णवं गार्हपत्याग्नावावसथ्ये ततः परम्।।

एकाक्षरादिसूक्तं च महीसूक्तं तथा यजेत्।

**नि.२९**

**अ.२९**

अग्न्यालयं प्रविश्यैव आघारं पूर्ववच्चरेत्।
ब्राह्मं रौद्रं पार्षदादीन् वैष्णवं च सुहूयते।।

श्रीभूमिभ्यां मुनिभ्यां च परिवाराधिदैवतान्।
दिनाधिदेवता हुत्वा सायं प्रातर्यजेद्गुरुः।।

**खि.३२. १२८**

अत्रिप्रोक्तक्रमेणैव मूर्तिहोमं हुनेत्ततः।
निवेदयेद्धविस्सम्यक् देवदेवाय शार्ङ्गिणे।।

## ७.९.१८ नवाहोत्सवे दिनाधिपहोमः

**वि.५४.३५५**

प्रथमे ब्राह्मं, द्वितीये चाऽऽर्षं, तृतीये रौद्रं, चतुर्थे वासवं, पञ्चमे सौम्यं, षष्ठे

वैष्णवं, सप्तमे सर्वदेवत्यं अष्टमे याम्यं नवमदिने वारुणं च जुहुयात्।

**वा.३२**

[अत्र नवमं दौर्गमेवेति इति पाठः दृश्यते।]

**नि.२९ ; प्र.२५.१२१, १२२ ; ज्ञा.९२.१७९ ;**

**य.४२.२१ - २४ ; अ.२९**

**ज्ञा.९२.१७७**

तद्दक्षिणेऽग्निकुण्डे अग्निं परिषिच्य वैष्णवं विष्णुसूक्तं मूर्तिमन्त्रानाज्येन देवेशाय हुत्वा तद्दिनाधिपमन्त्रपूर्वं तदालयगतपरिषद्देवेभ्यः सर्वेभ्यो मूर्तिमन्त्रैः हुत्वा आज्यमिश्रेण चरुणा च तथैव जुहुयात्।

### ७.९.१९ पञ्चदशाहोत्सवे दिनाधिदेवताहोमः

**स.५६.५० - ५५**

उत्सवोक्तदिनानां तु वक्ष्याम्यत्राधिदैवतम्।
प्रथमं ब्राह्ममुद्दिष्टं द्वितीयं चार्षकं मतम्।।

रौद्रं तृतीयं संप्रोक्तं चतुर्थं वासवं स्मृतम्।
पञ्चमं सौम्यमाख्यातं वैष्णवं षष्ठमुच्यते।।

सप्तमं सर्वदैवत्यमष्टमं वसुदैवतम्।
नवमं त्वाष्ट्रकं प्रोक्तं दशमं सौरमुच्यते।।

कौबेरमेकादशमं वायव्यं द्वादशं स्मृतम्।
त्रयोदशं तु कौमारं वैघ्नं चैव चतुर्दशम्।।

ततः पञ्चदशाहं तु वैष्णवं परिकीर्तितम्।
तद्दिनाधिपदैवत्यं दिने तस्मिंश्च हूयते।।

एवमेव विधानेन विष्णोरुत्सवमुत्तमम्।
भक्त्यैव कारयेद्यस्तु सर्वान् कामानवाप्नुयात्।।

**७.९.२० एकविंशतिदिनोत्सवे दिनाधिदेवताहोमः**
**क्रि.१४ - ५४ - ६१**

तत्राहस्तिथिवारर्क्षवाहनानां विशेषतः।
अधिदेवाश्च तन्मन्त्राः क्रमश्चैव प्रवक्ष्यते।।

प्रथमे ब्राह्मदैवत्यं द्वितीये चार्षमेव च।
तृतीये रुद्रदैवत्यं चतुर्थे वासवं तथा।।

पञ्चमे सोमदैवत्यं षष्ठे वैष्णवमाचरेत्।
सप्तमे सर्वदैवत्यम् अष्टमे याम्यमेव च।।

नवमे वारुणं प्रोक्तं दशमे वायुदैवतम्।
एकादशे तु कौमारं द्वादशे नैर्ऋतं यजेत्।।

त्रयोदश्यां तु वाराहं चतुर्दश्यां तु रौहिणम्।
गारुत्मतं पञ्चदश्यां षोडश्यां दौर्गकं यजेत्।।

सप्तदश्यां तु कौमारं जुहुयाद्देशिकोत्तमः।
अष्टादशे तु होतव्यं नरसूक्तं तु वित्तमैः।।

एकोनविंशतिदिने नरसूक्तं यजेद्बुधः।
विंशतितमे दिने चैव भूसूक्तं जुहुयाद् बुधः।।

एकविंशदिने चैव जुहुयात्पारमात्मिकम्।
एवमुत्सवदैवत्यं क्रमेण जुहुयाद् बुधः।।

**खि.३२.९२ - ९७**

प्रथमं ब्रह्मदैवत्यमार्षं स्यात्तु द्वितीयकम्।।

तृतीयं वै रौद्रमाहुश्चतुर्थं वासवं स्मृतम्।
पञ्चमं सोमदेवत्यं षष्ठं वैष्णवमुच्यते।।

सप्तमं सर्वदेवत्यमष्टमं याम्यमेव च।
नवमं चार्षकं प्रोक्तं दशमं सौरमुच्यते।।

कौबेरमेकादशकं वायव्यं द्वादशं स्मृतम्।
त्रयोदशं स्यात्कौमारं रौहिणं तु चतुर्दशम्।।

ततः पञ्चदशं चैव वैष्णवं परिकीर्तितम्।
सौरं तु षोडशं सप्तदशं कौबेरमुच्यते।।

अष्टादशं नृसूक्तं कौमारमेकोनविंशकम्।
वैघ्नं विंशतिकं प्राहुरेकविंशञ्च वैष्णवम्।।

### ७.९.२१ दशमादित्रिंशद्दिनान्तोत्सवे दिनाधिपदेवताहोमः

**ज्ञा.९२.१७९**

दशमादित्रिंशद्दिनान्तानां सूर्याग्निकुबेरकुमारवायुविष्णुप्रजापति बृहस्पति-गरुडदुर्गाचक्रनिरृतिश्रीमहीविष्वक्सेनपाञ्चजन्याश्विनीविश्वेदेवाग्नीषोमपितृसर्वदेवा इत्येताः यथाक्रमेण दिनानामधिदेवाः। तस्माद्दिनदैवत्यपूर्वमेव होतव्यम् इति। एतेषु अवभृथदिने सर्वदैवत्यं होतव्यमिति केचित्।

**नि.२९**

### ७.९.२२ दिनाधिपहोमद्रव्यम्

**वा.३२**

चरुणाज्येन समिधा हुनेत्तत्तद्दिनाधिपान्।

### ७.९.२३ तिथिदैवत्यहोमः

**वि.५४.३५५, ३५६**

प्रथमतिथावाग्नेयं, द्वितीयायां प्राजापत्यं, तृतीयायां कौबेरं, चतुर्थ्यां वैघ्नं, पञ्चम्यां श्रीदैवत्यं, षष्ठ्यां कौमारं, सप्तम्यामादित्यम्, अष्टम्यां रौद्रं, नवम्यां दौर्गं, दशम्यां याम्यं, एकादश्याम् ऐन्द्रं, द्वादश्यां वैष्णवं, त्रयोदश्यां मातृदेवत्यं, चतुर्दश्याम् ऐशं, पञ्चदश्यां सौम्यं च जुहुयात्।

**क्रि.१४.६२ - ६६ ;      प्र.२५. १२२ - १२४**

### ७.९.२४ वारदैवत्यहोमः

**वि.५४.३५६**

सूर्यवारादिषु तत्तद्दैवत्यं जुहुयात्।

**क्रि.१४.६६**

### ७.९.२५ नक्षत्रदैवत्यहोमः

**वि.५४.३५६**

[1]अग्नये कृत्तिकाभ्यः स्वाहेत्युत्यादि तत्तन्नक्षत्रे जुहुयात्।

**क्रि.१४.६७ ;      प्र.२५.१२५**

1. शिष्टानां नक्षत्राणां होममन्त्रः कृष्णयजुर्वेदब्रह्मणे नक्षत्रेष्टिकाण्डे द्रष्टव्याः।

### ७.९.२६ वाहनाधिदेवताहोमः

**क्रि.१४.६७**

तत्तद्वाहनदैवत्यं तत्तन्नाम्ना च हूयताम्।।

### ७.९.२७ सन्ध्यादेवताहोमः

**ज्ञा.९२.१७९**

प्रातःसन्ध्याधिपा इन्द्राणी सायमीशाना वारुणी। एवं सन्ध्याधिपदैवत्ययुक्तं परिषद्देवानां मूर्तिहोमं जुहुयात्।

### ७.९.२८ द्वारदेवताहोमः

**प्र.२५.१२४**

तत्तद्द्वारे तु जुहुयात् मन्त्रैर्द्वाराधिपोचितैः।।

### ७.९.२९ त्रिसन्धिषु होमः

**प्र.२५.१२५**

त्रिसन्धिषु हुनेदैन्द्रं सौरं बार्हस्पतं क्रमात्।।

### ७.९.३० मासदैवत्यहोमः

**प्र.२५.१२६**

मासर्क्षाधिपदैवत्यं मासदैवत्यमुच्यते।

### ७.९.३१ योगदैवत्यहोमः

**प्र.२५.१२६ - १२९**

याम्यं च वैष्णवं सौम्यं ब्राह्मं बार्हस्पतं तथा।।

सौम्यमैन्द्रं वारुणं च शेषाग्न्यादित्यभौतिकम्।

मारुतं भृगुदैवत्यं वारुणं वैघ्नमेव च।।

रौद्रं कौबेरकं त्वाष्ट्रं मैत्रं कौमारमेव च।
सावित्रीं श्रीदैवत्यं च गौरीदैवत्यमेव च।।

आदित्यं पैतृकं चैवाऽदितिदैवत्यमेव च।
योगदैवत्यमेतत्स्यात् जुहुयाद्विधिना पुनः।।

### ७.९.३२ करणदैवत्यहोमः

**प्र.२५.१३०, १३१**

ऐन्द्रं च प्राजापत्यं च मैत्रमार्यमणं तथा।
भूतश्रीयाम्यदैवत्यं भार्गवं वृषदैवतम्।।

कौबेरं वायुदैवत्यं जुहुयात् करणेषु वै।

### ७.९.३३ पक्षदैवत्यहोमः

**प्र.२५.१३१**

देवेभ्यः पितृभ्यश्चेति पक्षयोः शुक्लकृष्णयोः।।

### ७.९.३४ अयनदैवत्यहोमः

**प्र.२५.१३२**

सौरं चान्द्रं च जुहुयात् क्रमादयनयोर्द्वयोः।

### ७.९.३५ ऋतुदैवत्यहोमः

**प्र.२५.१३२**

मधुश्च माधवश्चेति जुहुयादृतुषु क्रमात्।।

## ७.९.३६ षष्टिसंवत्सराधिदैवत्यहोमः

**प्र.२५.१३३ - १३६**

विष्णुः प्रजापतिश्शूली विघ्नेशः सप्त चर्षयः।
अष्टौ लोकाधिपाः पञ्चभूता विश्वम्भरादयः।।

वसवोऽष्टौ च रोहिण्यः सप्त श्रीश्चण्डिका गुहः।
सूर्यः सोममश्विरञ्जीवी कालीवीशपुरन्दराः।।

चक्रश्शान्तो गुरुर्भौमबुधशुक्रशनैश्चराः।
हविःपालो ह्यनन्तश्च गङ्गा ज्येष्ठा च मातरः।।

प्रभवादिक्रमादेते विज्ञेया वत्सराधिपाः।

## ७.९.३७ उत्सवदिनेषु प्रातः सायं च होमाचरणम्

**प्र.२५.१४२, १४३**

एवमेव विधानेन द्विकालं होममाचरेत्।।

प्रातः सन्ध्यावसाने तु सायमर्चावसानके।
होमं कृत्वा बलिं दद्यात् द्विकालं चोत्सवं चरेत्।।

## ७.९.३८ उत्सवे भगवतो दूरयात्रायां होमाद्याचरणक्रमः

**क्रि.१४.१४८, १४९**

उत्सवे दूरमध्वानं देवेशं प्रापिते सति।
द्विक्रोशे वापि त्रिक्रोशे ग्रामान्तरगतेऽथवा।।

अपरेद्युः प्रकर्तव्या होमबल्यर्चनाक्रिया:।
पूर्वेद्युरेव कृत्वा ता गच्छेदिति च केचन।।

★★★

# १०. उत्सवाङ्गबलिप्रदानम्

## ७.१०.१ बलिप्रदानकालः

**वा.३२**

पूर्वोक्तेनैव मार्गेण बलिं दत्त्वा तु बुद्धिमान्।।

उदयात्पूर्वकाले तु चोत्सवं कारयेद्बुधः।
तथैव चापराह्ने तु दिवा चैवोत्सवं चरेत्।।

मध्याह्ने चार्धरात्रे च उभसन्धौ बलिं क्षिपेत्।
एवमेव क्रमेणैव दिनं प्रति समाचरेत्।।

काले बलिद्वये वाथ सहैवोत्सवमाचरेत्।

## ७.१०.२ रथ्याबलिदानाय शिलादिमयपीठकल्पनम्

**प्र.२७.३६८**

रथ्यासु बलिदानाय पीठं शैलादिभिर्भवेत्।

## ७.१०.३ बलिद्रव्यम्

**ज्ञा.९२.१७८**

द्रोणैः द्रोणार्धैः आढकैर्वा तण्डुलैः पक्वमन्नं कटाहे प्रक्षिप्य मुद्गनिष्पाव-कुलुत्थतिलतिल्वैः पक्वैः अपूपैः लाजैश्च युक्तं कृत्वा तद्बलिद्रव्यं तोयपुष्पगन्ध-धूपदीपाक्षतांश्च सङ्गृह्य।

**अ.२९**

बल्यर्थं पाचयित्वा तु द्विद्रोणं द्रोणमेव च।
मुद्गमाषतिलं चैव पाचयित्वा सहैव तु।।

पाचयित्वा विधानेन कटाहे प्रक्षिपेद्बुधः।
लाजापूपैस्सक्तुभिश्च पुष्पतोयसमायुतम्।।

**खि.३२.१०१ - १०३**

द्रोणैः द्रोणार्धकैर्वापि तदर्धैर्वापि तण्डुलैः।।

निष्पावैश्च कुलुत्थैश्च सलाजैस्सक्तुभिस्तथा।
पाचयित्वा विधानेन मुद्गतिल्वसमन्वितम्।।

अपूपैरपि संयुक्तं कटाहे प्रक्षिपेद्बलिम्।

**वा.३२**

पूर्वोक्तेन क्रमेणैव कटाहे प्रक्षिपेच्चरुम्।
मुद्गं निष्पावकं चैव कुलुत्थं माषमेव च।।

तिलैरपूपलाजैश्च यवान् सक्तून् यथाक्रमम्।
मुद्गादि सक्तुपर्यन्तं दिनं प्रति बलिं क्षिपेत्।।

एतद्द्रव्यस्य चालाभे शुद्धान्नं तत्र निक्षिपेत्।

**प्र.२५.१४१, १४२**

मुद्गं निष्पावकं चैव कुलुत्थं माषमेव च।
तिलानपूपान् लाजांश्च यवान् सक्तून् यथाक्रमम्।।

बलिद्रव्यणि चोक्तानि सर्वाभावे तु मौद्गिकम्।

## ७.१०.४ बलिदाने त्रिसन्ध्यं द्रव्यभेदः

**अ.३१**

त्रिसन्ध्यं च हविः कुर्यात् मध्याह्नेऽन्नबलिर्भवेत्।
सायं पुष्पबलिं कुर्यात् बलिं चैव यथाक्रमम्।।

## ७.१०.५ अन्नमूर्तिकल्पनम्

**अ.१७**

बल्यर्थं पाचयेदन्नं बलिपात्रे क्षिपेत्तथा।।
घृतेन दधि संयुक्तं मर्दयित्वा यथोचितम्।
दीपज्वालोपमं बिम्बं कौतुकाग्रे सुसन्यसेत्।
तच्छक्त्यावाहनं तत्र दीपान्तं च समर्चयेत्।।

## ७.१०.६ उत्तमादिभेदेन बल्यन्नमानम्

**अ.२९**

द्रोणार्धमुत्तमं विद्यात् मध्यमं चाढकं भवेत्।
अधमं चाढकार्धं तु पाचयित्वा विधानतः।।

## ७.१०.७ बल्यन्नस्वरूपम्

**अ.२९**

बलिपात्रे क्षिपेदन्नं अन्नरूपं प्रकल्पयेत्।
द्वात्रिंशदङ्गुलं श्रेष्ठं चतुर्विंशाच्च मध्यमम्।।
अधमं द्वादशाङ्गुल्यं त्रिविधं मानमुच्यते।

त्रिगुणं मूलनाहं च द्विगुणं मध्यमं भवेत्।।

तत्समं चोर्ध्वमित्युक्तं कल्पयित्वा यथाक्रमम्।

### ७.१०.८ बलिदानप्रयोगः

**ज्ञा.९२.१७८**

चक्रशान्तगरुडान् बलिञ्च क्रमेण नीत्वा एतेषां बिम्बाभावे दारुणा पीठानि कृत्वा तदालये तत्तन्मूर्तिमन्त्रैः पात्रेष्वाराध्य नयेत्। द्वारपालादितदालयगतदेवेभ्यो बलिं निर्वाप्य ग्रामेऽप्यष्टदिक्सन्धिषु तद्दिग्देवलोकपालेभ्यो देवेभ्यो भूतेभ्यो नागेभ्यो राक्षसेभ्यो वैरोचनगणेभ्यश्च मध्ये प्रागाद्यष्टदिक्षु च तत्तन्नाम्ना नमोऽन्तेन तोयं पुष्पगन्धधूपदीपाक्षतादि दत्वा बलिं निर्वाप्य तोयं दद्यात्। पूर्वं तोयं ततः पुष्पं बलिमन्ते तोयं दद्यादिति। एतद्बलिं दत्वा 'देवालये अत्राऽगताः सर्वे वैष्णवं बलिं भुञ्जन्ताम्। तदमृतं यथेष्टं सगणाः भवन्तो भुञ्जन्ताम्' इत्युक्त्वा प्रदक्षिणं गच्छेत्। भूतेभ्यो यक्षेभ्यो राक्षसेभ्यो नागेभ्यः पिशाचेभ्यः सर्वभूतेभ्य इत्युक्त्वा प्राग्दक्षिणमध्यमोत्तरावकाशेषु यथाक्रमं बलिं दद्यादित्यन्ये। ग्रामसन्धिषु सर्वत्रैवं बलिं निर्वाप्य आलयं प्रविश्य भूतपीठे बलिशेषं निर्वपेत्।

**स.५५.४७ - ५३**

[अत्र 'विष्वक्सेनं च चक्रं च स्वस्थाने संनिवेश्य च' इत्यधिकतया वर्तते इति विशेषः।]

**क्रि.१४.८३**

**अ.२९**

देवस्याभिमुखे न्यस्य आवाह्यार्चनमाचरेत्।।

भूषणं चोत्तरीयं च बल्यन्नं शिरसा धरेत्।
वीशं शैषिकचक्रं च याने चारोपयेत्क्रमात्।।

अग्रे भूतबलिं गत्वा चक्रं सानुगतो भवेत्।
पश्चादन्नबलिं गत्वा गरुडानुगतो भवेत्।।

शैषिकं च ततो गत्वा गत्वा चैव बलिक्रमात्।
धूपदीपसमायुक्तं घण्टारवसमायुतम्।।

बलिं प्रक्षिप्य तत्काले बलिवाद्यं सुघोषयेत्।
प्रथमं द्वारपालेशो द्वितीयं भूतमेव च।।

तृतीयं गरुडं चैव न्यक्षादीनां चतुर्थकम्।
पञ्चमं लोकपालानां षष्ठं चक्रबलिं क्षिपेत्।।

सप्तमं शङ्खमेवोक्तं अष्टमं ध्वजदेवतम्।
गोपुराणां बलिं दत्वा गोपुरद्वारदेवताम्।।

बलिं दत्वा यथान्यायं पश्चाद्ग्रामं प्रवेशयेत्।
इन्द्रादिलोकपालानां तत्तद्दिक्षु बलिं क्षिपेत्।।

तत्तद्दिक्षु बलिं तत्र ब्रह्मादीशान्तमाचरेत्।
यद्दिक्षु देवातागारं तद्दिगादिबलिं क्षिपेत्।।

इन्द्रपावकयोर्मध्ये भूतानां च बलिं क्षिपेत्।
यमपावकयोर्मध्ये यक्षाणां च बलिं क्षिपेत्।।

यमनैर्ऋतयोर्मध्ये राक्षसेभ्यो बलिं क्षिपेत्।

नीलवारुणयोर्मध्ये 'पिशाचेभ्य' इति ब्रुवन्।।

वरुणोदानयोर्मध्ये उरगाणां बलिं क्षिपेत्।
उदानसोमयोर्मध्ये गन्धर्वेभ्यो बलिं क्षिपेत्।।

कुबेरेशानयोर्मध्ये वैरोचनगणान् क्षिपेत्।
ईशानेन्द्रयोर्मध्ये अष्टादशगणान् क्षिपेत्।।

चतुष्कोणे त्रिकोणे वा द्विकोणेषु च सन्धिषु।
सन्धौ सन्धौ च सर्वेषां प्रक्षिपेच्च यथाक्रमम्।।

## वि.५३.३५० - ३५२

[1]तद्वेद्यां पश्चिमे विष्टरे देवेशं दक्षिणे चक्रं, उत्तरे विष्वक्सेनं च संस्थाप्य, अभ्यर्च्य, पश्चिमे देवाभिमुखे धान्यपीठे बलिरक्षकं च आराध्य, मुखवासं प्रदाय, देवेशमभ्यर्च्य, हविर्निवेद्य, विधिना अन्नबलिम् अर्घ्यबलिं पुष्पबलिं वा आराध्य, चक्रमग्रे वीशं शान्तं बलिबेरञ्च क्रमेण नयेत्।

पूर्ववद्बेराभावे चक्रादीन् पात्रेषु समावाह्य, अभ्यर्च्य नयेत्। अथवा चक्रं बलिबेरं च नयेत्। [2]पूर्ववत्प्रभूतं बलिमाहृत्य, शिष्येण वाहयित्वा, पुष्पगन्धधूपदीपाक्षतयुतं बलिदाता अग्रतो गच्छेत्। [3]पूर्ववद्द्वारपालादिभ्यः बलिं दत्वा, ग्रामस्य बाह्यवीथ्यां, महत्वे अभ्यन्तरवीथ्यां वा, प्रदक्षिणवशेन दिक्पालानां मध्ये ब्रह्मणश्च बलिनिर्वापं कारयेत्। ग्राममध्ये विमानं चेत्, मध्यादिनवदिक्षु बलिं दद्यात्। पश्चिमादिविमानेषु ब्रह्मबलिं विना दद्यादित्येके।

1. तद्वेद्याम् - कुम्भवेद्याम्।
2. पूर्ववत् - ध्वजारोहणाङ्गबलिदानवत्।
3. पूर्ववत् - ध्वजारोहणाङ्गबलिदानवत्।

यत्र वास्तुविन्यासविशेषो नास्ति, तत्राष्टदिक्षु, नवदिक्षु वा, बलिं क्षिपेत्। पौराणिकी श्रेणी चेत्, चतुष्कोणेषु सन्धिषु सर्वत्र क्षिपेत्। दण्डकश्चेत् पश्चिमे वरुणनिर्ऋतिवायुभ्यो मध्ये ब्रह्मयमकुबेरेभ्यः पूर्वे इन्द्रानिलेशेभ्यो दद्यात्। दक्षिणोत्तरं चेत् दक्षिणे यमनिर्ऋतिपावकेभ्यो मध्ये ब्रह्मवरुणेन्द्रेभ्यः उत्तरे कुबेरपवनेशेभ्यो बलिं दद्यात्। नदीतीराद्रिस्थाने (षु) आवरणाद्बहिरष्टदिक्षु क्षिपेत्। अथवा ग्रामो योजनादर्वाक् चेत्, तत्र गत्वा बलिमाचरेत्।

---------------------- तत्तन्नाम्ना पूर्वमुदकं पुष्पं बलिमुदकञ्च दद्यात्। एवम् इन्द्रादीशानान्तं सर्वेषु स्थानेषु एकं विष्टरं निधाय, तस्मिन् बलिनिर्वापं कुर्यादिति केचित्। ---------------- एवं क्रमात् प्रदक्षिणवशेन बलिं दत्वा, आलयमाविश्य, भूतपीठे बलिशेषं निर्वपेत्।

**य.४०.७७, ७८**

**नि.३०**

पुष्पमालासमायुक्तं देवेशं सम्प्रणम्य च।
शिष्यं गरुडवद्ध्यात्वा सोष्णीषं सोत्तरीयकम्।।

गन्धमाल्यैरलङ्कृत्य बृहस्पतीति च मन्त्रतः।
पूजको बलिमुद्धृत्य शिष्यस्य शिरसि न्यसेत्।।

गृह्णीयाच्छिरसा शिष्यः वैष्णवं मन्त्रमुच्चरन्।
तेन मन्त्रं समुच्चार्य बलिमेवं समुद्धरेत्।।

देवमादाय हस्ताभ्यां तं शिष्यः शिरसा वहेत्।
'उद्यन्त'मिति चोक्त्वा तु गच्छेद्गेहं प्रदक्षिणम्।।

छत्रपिञ्छवितानाद्यैः चामराद्यैश्च संयुतम्।
धूपदीपसमायुक्तं शकुनसूक्तसमन्वितम्।।

पूर्वं शङ्खध्वनिं कुर्याद्द्वितीयं काहलादिकान्।
पटहादिसर्ववाद्यैश्च घोषयेच्च महाध्वनिम्।।

मण्डपस्य च बाह्ये च प्रच्छत्पटादि संयुतम्।
प्रथमं प्रदक्षिणं कुर्यात् बलिदानं प्रकल्पयेत्।।

भेरीमाच्छाद्य संयुक्तं गेयवाद्यसमन्वितम्।
पूर्वापरं च नृत्यन्तं यष्टिप्रहरनृत्तकम्।।

ईशाग्रे धूम्रदालीदलाण्डं शृङ्गमाचरेत्।
गोपुरस्य बहिर्गत्वा निश्शष्दं च विनिर्गमेत्।।

भूतपीठसमायुक्तं तृतीयं तु प्रदक्षिणम्।
गान्धारं पञ्चमं चैतल्लारागं च कैशिकम्।।

दशातारी मरूत्कोल्लिमल्लरी गौहमेव च।
एतैर्गतस्वरैर्वाद्यैः अष्टदिक्षु च घोषयेत्।।

प्रथमावरणे चैकं द्वितीये तु द्वितीयकम्।
तृतीयावरणे हीने द्वितीयावरणे सति।।

प्रथमायां सकृत्कृत्वा द्वितीयायां द्वितीयकम्।
क्रमेणैव तथा कृत्वा तृतीयं प्रथमे पुनः।।

प्रथमावरणे हीने द्वितीयायां विहीनके।
प्रथमे च तथा कुर्यात्तृतीयं च प्रदक्षिणम्।।

बलिपीठमुखायामे यदि चावरणाद्बहिः।

पूर्वमावरणं कृत्वा पश्चात्पीठेऽपि कारयेत्।।

आवरणं न चात्रैव क्रमशस्सञ्चरेद्बुधः।
तस्यां गर्भालये द्वारे तद्दिश्यादिप्रदक्षिणम्।।

सर्ववाद्यसमायुक्तं पश्चाद्देवं प्रवेशयेत्।
वीशशैषिकयोर्मध्ये तिष्ठेद् देवनिरीक्षणम्।।

प्रणवेनैव चाभ्यर्च्य बलिदेवं विसृज्य च ।
पादुके च सुसन्न्यस्य पाद्याद्यर्घ्यान्तमर्चयेत्।।

समारोप्य तथा युक्त्वा दर्शयित्वा प्रदापयेत्।
हस्ताभ्यां देवमादाय पूर्वस्थाने तु सन्न्यसेत्।।

बलिमादाय गत्वा तु भूतपीठे बलिं क्षिपेत्।
पादौ प्रक्षाल्य चाचम्य देवागारं प्रविश्य च।।

अनुगच्छन्ति भक्त्या ये बलिं ते पुण्यभागिनः।
पदे पदे यज्ञफलं लभेयुरिति शासनम्।।

**अ.३१**

शिष्यं गरुडवद्ध्यात्वा उष्णीषं चोत्तरीयकम्।
गन्धैर्माल्यैरलङ्कृत्य धूपदीपसमन्वितम्।।

बृहस्पतेति, मूर्ध्ना च आचार्यश्च सुबुद्धिमान्।
आदाय भूषणैर्जुष्टं तद्बिम्बं शिरसा धरेत्।।

छत्रपिञ्छवितानाद्यैः चामरैरुपवीजयेत्।

धूपदीपसमायुक्तं घण्टानादं च ताडयेत्।।

प्रथमं शङ्खध्वनिं कुर्यात् बिम्बं तालं प्रकल्पयेत्।
पूर्वापरनृत्तं च यष्टिप्राहारनृत्तकम्।।

द्वितीयं प्रदक्षिणं चैव इन्द्रस्य समतालकम्।
अग्निमद्वारुणं (मन्दारुणं?) चैव यमस्य ग्रहतालकम्।।

नैर्ऋत्यां कोटितालं च वारुणे नवतालकम्।
वायव्यां वृषभं लध्वी(दल्ली) सोमे झल्लरितालकम्।।

इशे तु मेड्तालं च तालान्ते शङ्खमाचरेत्।
गोपुरं च ततो गत्वा निश्शब्दं च विनिर्गमेत्।।

भूतपीठे बलिं दत्वा कृत्वा च त्रिः प्रदक्षिणम्।
शङ्खादिसर्ववाद्यानां घोषणं च समाचरेत्।।

पादप्रक्षालनं चैव द्वारवाह्ये प्रकल्पयेत्।
पादरक्षां समर्पयित्वा पाद्याद्यर्घ्यान्तमाचरेत्।।

स्वे स्थाने स्थापितं चैव देवदेवं नमस्कृतम्।
अन्नरूपं ततः पश्चात् उद्वाहनमथाचरेत्।।

विष्वक्सेनालयं विश्य बल्यन्नं चैव खण्डितम्।
चरकी देवता चैव पूतना पापराक्षरी।।

विष्वक्सेनबलिं पश्चात् बलिं तोयसमायुतम्।
तच्छेषं भूतपीठे तु विसृजेज्जलसंयुतम्।।

पात्रप्रक्षालनं कृत्वा पादौ प्रक्षाल्य चाचमेत्।

**खि.३२.१०३ - ११२**

पुष्पं तोयं धूपदीपगन्धाक्षतयुतं तथा।।

घण्टानादसमायुक्तं सर्ववाद्यसमन्वितम्।
बलिद्रव्यं समादाय द्वारपालपुरस्सरम्।।

बलिं दद्यात् विधानेन चक्रस्य पुरतो व्रजेत्।
चक्रस्य पश्चिमे वीशं तत्पृष्ठे चामितं नयेत्।।

बलिर्देयः प्रत्यत्नेन बलिवाद्यसमन्वितम्।
आचार्यो हरिरूपः स्याच्छत्रचामरसंयुतः।।

सर्वालङ्कारसंयुक्तः सर्ववाद्यसमन्वितः।
जनैः परिवृतो गच्छेद्यजमानश्च हर्षितः।।

चतुष्कोणे त्रिकोणे च द्विवीथ्यन्तरवीथिषु।
सन्धौ सन्धौ बलिं दद्यात् भूतादिभ्यो यथाक्रमम्।।

मध्यमं सन्धिमास्थाय भूतेभ्यः सर्वतः क्षिपेत्।
यक्षेभ्यो दक्षिणे दद्यात्पिशाचेभ्यश्च पश्चिमे।।

उत्तरे नागमुखेभ्य इत्युक्त्वा मन्त्रवित्तमः।
'ये भूते'ति मन्त्रेण दिश्यूर्ध्वायाञ्च निक्षिपेत्।।

तोयं दत्वा तु पूर्वं वै पुष्पं च तदनन्तरम्।
गन्धान् दद्यात्ततः पश्चात् धूपं दीपं ततः परम्।।

बलिं पश्चात् क्षिपेत्तत्र पश्चात्तोयं समर्पयेत्।
एवं प्रदक्षिणवशात् बलिं ग्रामे विनिक्षिपेत्।।

### ७.१०.९ ग्रामादौ बलिदानक्रमः

**वा.३४**

अत उर्ध्वं प्रवक्ष्यामि ग्रामादीनां बलिक्रमम्।

------------------------------------।
याम्यपार्श्वे विमानं चेत् पूर्वं ब्रह्मणि निक्षिपेत्।।

सर्वेषामन्यदेवानां प्रादक्षिण्यवशेन तु।
वास्तुभेदा न हन्यं तु बलिमेव विशेषतः।।

देवेशस्योत्सवे चैव पृथगेव यथाक्रमम्।

------------------------------------।
[1]उत्सवे त्रिविधे चैव ध्वजारोहणपूर्वकम्।।

द्विकालानां बलिं दद्यात् केवलं चक्रमूर्तिना।
बलिबेरं च शान्तं च वीशं चैव विना चरेत्।।

अन्यत्सर्वत्र कर्मसु पूर्वोक्तेनैव कारयेत्।
वास्त्वङ्गालयदेवाग्रे बलिं दत्वा पृथक् पृथक्।।

तद्देवनाममन्त्रैश्च सकृद्दत्वा बलिं क्षिपेत्।
आरम्भदिवसादूर्ध्वमवसानदिनादधः।।

---

1. शान्त्युत्सव - भक्त्युत्सव - कालोत्सवाख्ये त्रिविधे उत्सवे इत्यर्थः।

कालद्वयं बलिं दद्यात् दिनं प्रति तथैव च।
सर्वद्रव्यबलिं दद्यात् मूर्तचक्रस्य सन्निधौ।।

ब्रह्मादीशानपर्यन्तं कुर्यान्मध्यालयेपि च।
तथापि पश्चिमे कुर्यात् वरुणादिक्रमात् क्षिपेत्।।

प्रमुखे मूर्तचक्रस्य चौत्सवस्य बलिं क्षिपेत्।
मृदुवाद्यसमायुक्तं तेन कर्म समाचरेत्।।

उत्सवं चक्रहीनं तु न कुर्यादिति शासनम्।
भूतादि चतुरो देवाः दिग्दैवत्यसमायुताः।।

गन्धर्वैश्चाप्सरोभिश्च सप्तैते सन्धिदेवताः।

असुरैः पन्नगैर्युक्तां नवदेवाश्च केचन।
इन्द्रादीशानपर्यन्तं आलये तु पृथक् पृथक्।।

प्रथमं यत्र दृश्येत तद्दिग्दैवत्यपूर्वकम्।
द्विकालमुत्सवं चैव बलिवीथ्यां न शक्यते।।

क्षुद्रमेव बलिर्वीथ्यामुत्सवं सर्वमाचरेत्।

### ७.१०.१० राजधान्यां बलिदानक्रमः

**खि.३२.११३ - ११८**

राजधानी यदि भवेत् राजवेश्माङ्कणेऽपि च।
इन्द्राय तु बलिं दद्यात् बलिमन्त्रमुदीरयेत्।।

'इन्द्राय विष्णवे तुभ्यं नमोऽस्तु पृथिवीपते।
रक्षस्व जगतीमेतामपि माम्' इति चोच्चरेत्।।

जयश्रियै च तत्पार्श्वे शचीदेव्यै च निक्षिपेत्।
शङ्खपद्मनिधिभ्यां च तत्रैव द्वारपार्श्वयोः।।

पश्चादैन्द्रादिकं स्थानमासाद्य तु क्षिपेद्बलिम्।
पश्चादालयमाविश्य बलिशेषं प्रगृह्य च।।

भूतपीठे विनिक्षिप्य पश्चादभ्यन्तरं विशेत्।
चक्रादींश्च प्रतिष्ठाप्य तत्तत्स्थाने यथाक्रमम्।।

बलिं पश्चाद्यथापूर्वं तथैव च विसर्जयेत्।

**य.४०.७८ - ८० ; वि.५३.३५२**

**वा.३४**

राजधान्युत्सवं चेत्तु बलिक्रम इहोच्यते।।

पूर्वोक्तेन विधानेन द्वारपालान् विनिक्षिपेत्।
पश्चाद्वेश्म प्रविश्यैव चादिभूमेस्तु मध्यमे।।

सर्वभूतबलिं दत्वा ब्रह्मणश्च बलिं क्षिपेत्।
पूर्वे तु यक्षराराजाय बलिं दद्यात् स्वनामतः।।

द्वारस्य दक्षिणे चैव शङ्खस्य तु बलिं क्षिपेत्।
वामे पद्मनिधेश्चैव बलिं दत्वा यथाक्रमम्।।

वेश्मनिर्गमने चैव ऐन्द्रस्थानं प्रविश्य च।
इन्द्रादिलोकपालानां बलिं दत्वा यथाक्रमम्।।

प्रदक्षिणं तथा वेश्म प्रविशेदालयं पुनः।
यस्यां दिशि विमानं स्यात् तद्दिक्पूर्वं बलिं क्षिपेत्।।

अथवा जनवासे च रक्षायै तु बलिं क्षिपेत्।
महावीथी बलिं चैव उत्सवे न तु शक्यते।।

राजवेश्मबलिं चैव वास्तुदेशे विशेषतः।
अन्येषामपि देवानां राजवेश्मबलिं क्षिपेत्।।

तत्तत्सूक्तं जपित्वैव घोषयेद्देशिकोत्तमः।
महावीथीगते चैव इन्द्रादीनां बलिं क्षिपेत्।।

सन्धौ सन्धौ बलिं क्षिप्त्वा भूतादिभ्यो बलिं क्षिपेत्।
पश्चादालयमाविश्य भूतपीठे बलिं क्षिपेत्।।

एवं बलिक्रमं पश्चादुत्सवं तत्र कारयेत्।

### ७.१०.११ उत्सवदिनेषु सायं प्रातः बलिदानम्

**प्र.२४.१४५ - १४८**

ध्वजारोहणमारभ्य चोत्सवादि दिनादधः।।

सायं प्रातश्च पूजान्ते ध्वजारोहणवद्बलिम्।
शिष्येण गुरुणा चाथ चक्रस्याभिमुखे तथा।।

नित्यं रात्रौ विशेषेण तथा भूतबलिं क्षिपेत्।
वीशामितौ विना धीमान् तीर्थान्तं सर्वरात्रिषु।।

चक्रमेव नयेद्विद्वान् बलिरक्षणहेतवे।

## ७.१०.१२ बलिदानकाले सुराङ्गनानृत्तम्

**अ.३१**

बलिकाले च नृत्ते च सुराङ्गनाः प्रकल्पयेत्।।

हीनाङ्गी च विरूपी च अतिवृद्धाऽल्पबालिका।
वर्जयेच्च सुरां कन्यां सम्यङ् नृत्ते प्रकल्पयेत्।।

सर्वलक्षणसम्पन्नां सर्वसौन्दर्यसंयुताम्।
कुलजातिप्रसूतां च कल्पयेन्नृत्तनृत्ययोः।।

प्रातःस्नानं तु कृत्वा सा दन्तधावनमाचरेत्।
अञ्जनं चानुलेपं च ताम्बूलेनास्यशोधनम्।।

शुद्धवस्त्रसमायुक्तां नानाभूषणभूषिताम्।
नृत्तशालां प्रवेश्यैव प्रमुखे मण्डपे न्यसेत्।।

तन्मध्ये भवमभ्यर्च्य 'रुद्रमन्ये' ति चोच्चरन्।
अर्चयेद्गन्धपुष्पाद्यैः मण्डलस्थं हरिं प्रभुम्।।

'आपोहिष्ठा' ऋचा पश्चात् प्रोक्षयेच्च सुराङ्गनाम्।
सुराङ्गना च बाहुभ्यां पुष्पमालावलम्बितम्।।

हस्तेन पुष्पतोयं सुराङ्गनायां सुसन्न्यसेत्।
प्रथमं पुष्पाञ्जलिं च गरुडनृत्तं प्रकल्पयेत्।।

हस्तौ पादौ च दृष्ट्वा तु करणं भूमिमाचरेत्।
मध्याह्ने सायमभ्यर्च्य बल्यादीनां च पूर्ववत्।।

मध्ये रात्रौ हविर्दद्यात् बल्यादींश्च न चाचरेत्।
नृत्तमार्गमलङ्कारं रङ्गरोहणलक्षणम्।।

खिलाधिकारमार्गेण सर्वं सम्यक् समाचरेत्।

### ७.१०.१३ बलिदानम् उत्तमम्

### वि.५३.३५१

[1]तस्मिन् स्थाने दर्भान् विकीर्य, तत्तद्दिगीशाय बलिं दत्वा, प्रागाद्यष्टदिक्षु सर्वेभ्यो देवेभ्यो, भूतेभ्यो, न्यक्षेभ्यो, राक्षसेभ्यः, पिशाचेभ्यो, नागेभ्यो, गन्धर्वेभ्यो, अष्टादशगणेभ्यश्च बलिं दद्यात् उत्तमम्।

### ७.१०.१४ बलिदानम् मध्यमम्

### वि.५३.३५१ - ३५२

[2]तस्मिन् स्थाने दर्भान् विकीर्य, तत्तद्दिगीशाय बलिं दत्वा, ------- प्रागादि चतुर्दिक्षु सर्वेभ्यो भूतेभ्यो यक्षेभ्यो राक्षसेभ्यो बलिं दद्यान्मध्यमम्।

### ७.१०.१५ बलिदानम् अधमम्

### वि.५३.३५१, ३५२

[3]तस्मिन् स्थाने दर्भान् विकीर्य --------- तन्मध्ये तद्दिगीशाय बलिं दद्यात् अधमम्।

★★★

1 तस्मिन् स्थाने - बलिदानस्थाने।

2 तस्मिन् स्थाने - बलिदानस्थाने।

3 तस्मिन् स्थाने - बलिदानस्थाने।

# ११. ग्रामप्रदक्षिणम्

## ७.११.१ शिबिकादौ भगवतो ग्रामप्रदक्षिणम्

**प्र.२५.१४४ - १६७, १७१ - १९०**

उत्सवभ्रमणं वक्ष्ये देवदेवस्य शार्ङ्गिणः।
बलिनिर्वापणान्ते तु सायं प्रातर्विशेषतः।।

देवदेवमलङ्कृत्य वस्त्राद्यैर्भूषणैः शुभैः।
सुगन्धपुष्पमालाभिर्गन्धैरपि मनोहरैः।।

रथे वा शिबिकायां वा वीशस्कन्धेऽपि वा तथा।
गजाश्वान्दोलिकादौ वा वाहने समलङ्कृते।।

'अहमेवेद'मन्त्रेण देवमारोप्य निश्चलम्।
अष्टोपचारैरभ्यर्च्य लाजापूपादिकांस्तथा।।

संस्कृतान् गुडसंमिश्रान् निवेद्य मुखवासकम्।
दत्वा वाद्यैस्समायुक्तं सर्वालङ्कारसंयुतम्।।

दासीभिर्वादकैश्चैव नृत्तगेयसमन्वितैः।
ब्राह्मणैर्वेदविद्भिश्च समायुक्तं शनैश्शनैः।।

ध्वजैश्छत्रैरातपत्रैस्तोरणैश्च तथैव च।
सम्भृतैस्संयुतं चान्यैः सर्वैः शृङ्गारलक्ष्मभिः।।

वालव्यजनहस्ताभिर्दासीभिः पार्श्वयोर्द्वयोः।
वीज्यमानं विशेषेण तथा भक्तवरैरपि।।

वाहयेयुर्द्विजा देवं ब्राह्मणा वेदपारगाः।
दीपैरुदग्रैर्बहुभिः परिषिक्तैर्घृतादिना।।

परस्सहस्रैस्सर्वत्र दीपयेच्च शतावरैः।
विप्रैस्त्रयीमधीयानैः जपस्तुतिपरायणैः।।

नृत्यता गायता चापि गाणिक्येन सुसेवितम्।
वीणादिवादिभिश्चैव वन्दिभिश्च तथा परैः।।

षड्जादिगीतिनिपुणैः वाद्यवादनकोविदैः।
गद्यं पद्यं तथा मिश्रं पठद्भिस्स्तोत्रमुज्ज्वलम्।।

वैतण्डिकैस्तथा जल्पैः निपुणैर्वादशिक्षितैः।
तथा तत्त्वकथानिष्ठैः पदार्थज्ञैश्च तार्किकैः।।

मीमांसकैर्याज्ञिकैश्च छान्दसैः सांख्यकोविदैः।
योगज्ञैश्च पुराणज्ञैः शाब्दिकैस्तत्त्ववेदिभिः।।

मौहूर्तिकैश्च गणशः परस्परजिगीषुभिः।
तत्तच्छास्त्रोक्तमार्गेण प्रमेयं च बहुस्थितम्।।

उच्चैर्ब्रुवाणैर्विद्वद्भिः पञ्चकालपरायणैः।
वासुदेवस्य माहात्म्यं कथयद्भिश्च सात्वतैः।।

शास्त्रेषु नैपुणं सर्वं प्रदर्शयितुमुद्यतैः।
देवस्य पुरतः पृष्ठे पार्श्वतश्च स्थितैर्जनैः।।

सेनया सर्वतो दिक्षु चतुरङ्गबलाढ्यया।
देवस्य पार्श्वयोः पूर्वे लाक्षारञ्जितमस्करैः।।

यन्त्रैर्दारुमयैश्चित्रैः पक्ष्याकारैरितस्ततः।
देवताकृतियन्त्रैश्च तथा .यन्त्रैः गजादिभिः।।

निषादिभिस्समारूढैः स्त्रीभिश्च भरतोदितैः।
मार्गैर्बहुविधैर्नृत्तं दर्शयन्तीभिरद्भुतम्।।

लेखायन्त्रैः स्त्रियारूढैः यन्त्रैरन्यैस्तथाविधैः।
गतागतानि कुर्वाणैरनुयातं समाकुलैः।।

शनैर्नयेज्जगन्नाथं यथाशक्तिसमन्वितैः।
आरभ्यावरणादाद्यात् एषा परिवृतिर्भवेत्।।

देवेन सार्धमाचार्यो यानमारुह्य तत्र तु।
रक्षार्थं देवदेवस्य ध्यायन्नुपविशेद्धरिम्।।

अर्चकश्च तथासीनः सम्यगर्चनमाचरेत्।

---

तत्काले देवमायान्तं भक्ता भागवता जनाः।
स्वगृहप्राङ्गणे चैव प्रत्युत्थाय पुनः पुनः।।

प्रणम्य चोपहारांश्च दद्युर्बहुविधान् बहुन्।
पत्रं पुष्पं फलं पूगं नागवल्लीदलान्यपि।।

दक्षिणां च विशेषेण यथाशक्ति यथारुचि।
नीराजनादि कुर्युश्च बालवृद्धातुरास्तदा।।

तपोभिर्बहुभिर्गम्ये स्वयमेव परात्परे।
भक्तानुकम्पया देवे स्वगृहद्वारमागते।।

को न नन्दति मूढात्मा तस्य का निष्कृतिर्भवेत्।
तत्काले चार्पितं द्रव्यं यदपक्कं प्रगृह्य च।।

अमन्त्रं तु निवेद्यैव भगवत्प्रियमाचरेत्।
उपहारेषु तत्रार्धं गृह्णीयाद्भागमर्चकः।।

नागवल्लीदलं पुष्पं क्रमुकं दक्षिणादिकम्।
सर्वमर्चकसर्वस्वं गृह्णीयादर्चकः स्वयम्।।

तत्काले भक्तिनम्रेभ्यः सम्प्राप्तेभ्यश्च सन्निधिम्।
भगवत्पादुकां दद्यात् शिरसि श्रद्धया गुरुः।।

शिरसा धारणे मर्त्यैः स्पृष्टिदोषो न विद्यते।
न नयेत्पादुकां विष्णोर्दूरीकृत्य तु सन्निधिम्।।

न गृहद्वारसीमान्तं नयेत्तां गृहिणां गुरुः।
इष्टं राजगृहे स्त्रीभिः पादुकाधारणं यदि।

देहलीमनतिक्रम्य नयेत्तां दीपिकान्विताम्।
तदा दीपैस्तथाऽन्यैश्च राजार्हैश्च परिच्छदैः।।

नेया स्यात्पादुका विष्णोः प्रणिधिस्सा यतो हरेः।
तत्सन्निधिमतिक्रम्य पूजकस्तु न जातुचित्।।

आदानायोपहाराणां प्रयायात् गृहिणां गृहान्।
नापि कार्यान्तरासक्तः पञ्चहस्तानतिक्रमेत्।।

एष श्रेष्ठोपचारस्स्यात् यतः सम्मान्यते हरिः।
एवं प्रदक्षिणं नीत्वा निवर्तेतालयं प्रति।।

गोपुराग्रे तु देवेशं कृत्वा देवोन्मुखं क्रमात्।
अर्घ्यपाद्यादिनाऽभ्यर्च्य निवेद्य पृथुकादिकम्।।

धामप्रदक्षिणं नीत्वा पुनराविश्य चाऽलयम्।
अवरोप्य च देवेशं स्थाप्य चास्थानमण्डपे।।

पाद्यमाचमनं दत्वा मुखवासं प्रदाय च।
कौतुकं तु विसृज्यैव शुद्धोदैःस्नापयेत्प्रभुम्।।

विमृज्य प्लोतवस्त्रेण समलङ्कृत्य पूर्ववत्।
कौतुकं पुनराबद्ध्य हविः पश्चान्निवेदयेत्।।

कुर्याद्राजोपचाराणि स हि राजा जगत्प्रभुः।
विनोदं कारयेच्चैव नृत्तगीतादिभिर्बहु।।

ततः प्रणम्य देवेशं पूर्वस्थाने निवेशयेत्।
प्रथमेऽहनि साये तु कर्तव्यमिदमीरितम्।।

**नि.२९**

**वि.५३.३५२ - ३५४**

शिबिकायानं वस्त्रगन्धमाल्याद्यैरलङ्कृत्य, देवेशं नानावर्णाम्बरैर्नवैः कौशेयाद्यैः सूक्ष्मकार्पासतन्तुकृतैश्च रत्नयुतमकुटाङ्गदमकरकुण्डलकेयूरहारकटि-सूत्रोदरबन्धनाङ्गुलीयकमुक्तादामप्रलम्बयज्ञोपवीताद्याभरणैः सुगन्ध-माल्यैर्नानाविधगन्धैश्चालङ्कुर्यात्। अज्ञानादर्थलोभाद्वा देवस्यालङ्कारे हीने सर्वहानिर्भवेत्। यत्नेनालङ्कुर्यात्।

वस्त्रं जीर्णं स्फुटितमुपयुक्तं वा यो दद्यात् तस्य महत्तरो दोषो भवति।

नवं मृदु सूक्ष्मं वस्त्रं यो दद्यात् स कुलैस्सप्तभिर्युक्तो विष्णुलोकमवाप्नुयात्।

भक्तियुक्तैश्शूद्रैरनुलोमैर्वाहयित्वा न दोषो भवति। तत्प्रतिलोमैर्भक्तियुक्तैर्वाहनं दोषाय भवति। अकिञ्चनब्राह्मणैर्वाहनं तन्मुख्यं भवत्यनन्तरजैर्मध्यम-मनन्तरजैरधमम्।

देवेशं प्रणम्य 'वेदाह'मिति यानमारोप्य, सौवर्णैः पुष्पैरन्यैर्वा प्रभामण्टप-मलङ्कृत्य योजयेत्। नर्तकगायकवादकाः चामरव्यजनमयूरताल-वितानवृन्तादिधराः हेमरजतताम्रपरिच्छदढक्कावितानध्वजपताकादिधराः तोयविक्षेपकाश्च जनाः पुरतो गच्छेयुः। छत्रधराः धूपदीपधराः परितो गच्छेयुः। वेदान् जयशब्दान् स्तोत्रादीनि च पठन्तोऽनुगच्छेयुः। -------- तद्ग्रामवासिनो जना यानस्थं देवं स्वेषु गृहेषु दीपाङ्कुराद्यैः प्रत्युत्थानं कृत्वा नमस्कुर्युः। कदलीचूतपनसनालिकेरापूपलाजपृथुकादीनि ब्राह्मणानीतानि सङ्गृह्यामन्त्रकं निवेदयेत्। शूद्रानुलोमानीतान्यपक्वानि निवेदयेत्। प्रतिलोमानीतनि तानि सर्वाणि वर्जयेत्। एवं ग्रामं प्रदक्षिणीकृत्य, शकुनसूक्तेनाऽऽलयमावेश्य, आस्थानमण्डपे सिंहासने विष्टरे वा देवं संस्थाप्य, पाद्याद्यैरभ्यर्च्य, मुखवासं दत्वा राजवदुपचारं कृत्वा शुद्धस्नपनविधिना संस्नाप्य, अभ्यर्च्य, महाहविः प्रभूतं वा निवेद्य पानीयाचमनमुखवासं दत्वा, द्वितीयाहः प्रभृति नित्यं सायं प्रातर्नित्यार्चनान्ते द्विगुणार्चनं हविर्निवेदनं कुम्भदेवाराधनं होमं बलिदानं च कृत्वा, सायंप्रातः एवमेवोत्सवं कारयेत्।

**ज्ञा.९२.१७८, १७९**

**स.५५.५४ - ८२**

सौवर्णमुक्ताभरणैर्बहुवर्णाम्बरैरपि।
पुष्पैश्च बहुभिर्गन्धैरलङ्कारैः स्वशक्तितः।।
अलङ्कृत्योत्सवं बिम्बं दर्शनीयं च सुन्दरम्।

शकुनसूक्तेन चानीय रथन्तरमिति ब्रुवन्।।

देवमारोपयेद्रङ्गे शिबिकायां रथेऽथवा।
सौवर्णैरुत्पलैः पुष्पैरलङ्कुर्यात् प्रभां ततः।।

पद्मैर्वा कुमुदैर्वाथ पुष्पैरन्यैश्च शक्तितः।
पुष्पैर्गन्धसमायुक्तैरलङ्कृत्य प्रभामपि।।

प्रभां संयोज्य देवेशं यानेनैव च संनयेत्।
अश्वा गजा जनास्सैन्या व्रजेयुस्तदनुक्रमात्।।

ध्वजांश्चापि पताकांश्च वहन्तोऽनुव्रजन्ति वै।
यन्त्रारूढाश्च नृत्यन्तो योषितश्च व्रजन्त्यनु।।

वाद्यानां घोषकाः सर्वे घोषयन्तोऽनुयान्तु ते।
नृत्यन्तो नर्तकाश्चापि गायन्तो गायकास्तथा।।

ततोऽनुगच्छेद्देवेशं शार्ङ्गपाणिं खगध्वजम्।
छत्रैः पिञ्छैर्वितानाद्यैर्भक्तियुक्तः स्वशक्तितः।।

श्वेतच्छत्रैस्तथान्यैश्च हेमाभैर्हरितैरपि।
नानावर्णैश्च परितश्चोर्ध्वे सञ्छादयेद्धरिम्।।

हेमरक्तसमायुक्तैश्चामरैश्च सितैरपि।
व्यजनैर्विविधैश्चापि पिञ्छैरन्यैश्च संयुतैः।।

तालवृन्तैश्च सर्वत्र देवेशमुपवीजयेत्।
राजतानि च हैमानि पात्राणि परितो नयेत्।।

धूपं बहूंश्च दीपांश्च देवस्य परितो नयेत्।

वीणावेणू तथा सम्यग् वादयेयुश्च सुस्वरम्।।

भक्ता जनाश्च विप्राद्याः स्तोत्रैश्च स्तुतिभिस्तथा।
स्तुवन्तोऽनुव्रजन्त्येनं पार्श्वतश्चाप्यलङ्कृताः।।

देवेशं येऽनुसेवन्ते पुण्यलोकमवाप्नुयुः।
एवमेव क्रमाद्गच्छेत्पूर्वोक्तेन पथा तथा।।

पूर्वोक्तैरपि सर्वैस्तमलङ्कारैः समायुतम्।
यानस्थमुत्सवं देवं गच्छन्तं च प्रदक्षिणम्।।

स्वे स्वे तत्र गृहाभ्याशे विप्राद्यास्तु मुदान्विताः।
दीपाङ्कुरोदकुम्भाद्यैः प्रत्युत्थायैव भक्तितः।।

स्ववंश्याश्च नमस्कृत्य पाद्यपुष्पानुलेपनैः।
पूजयेयुश्च तैर्नित्यं भक्ष्यमाणं प्रगृह्य च।।

विष्णवे नम इत्युक्त्वा तत्र देवं निवेद्य च।
आचमनं प्रदायैव मुखवासं निवेदयेत्।।

एवमेव तु तद्ग्रामं कारयेत प्रदक्षिणम्।
तथा प्रदक्षिणं कृत्वा प्रविशेदालयं पुनः।।

देवस्यालोकनेनैव श्रीरारोग्यं प्रजास्तथा।
धनधान्यानि सर्वाश्च सम्पदश्च भवन्ति च।।

अशुभानि च सर्वाणि विनश्यन्ति न संशयः।
अवरोप्याथ यानाच्च देवमादाय पूर्ववत्।।

प्रविश्य मन्दिरं तत्र मण्टपेऽलङ्कृतेऽथवा।

पीठे संस्थाप्य देवेशं पूजयेदष्टविग्रहैः।।

उत्तमैः कलशैर्देवं चतुर्विंशतिभिः क्रमात्।
पूर्ववत्स्नापयेदद्भिः केवलैर्मध्यमेऽधमे।।

संस्नाप्य पीठे संस्थाप्य देवं सिंहासनेऽथवा।
प्लोतवस्त्रोत्तरीयाद्यैर्भूषणैश्च विभूष्य च।।

सुगन्धैरथ माल्यैश्च गन्धैर्देवमलङ्कृतम्।
आस्थानमण्टपे सम्यगलङ्कारैः समायुतम्।।

देवं संस्थाप्य पाद्याद्यैरर्चयित्वा प्रणम्य च।
महाहविः प्रभूतं वा पूर्ववत् संनिवेदयेत्।।

अपूपादीनि भक्ष्याणि फलान्यपि निवेदयेत्।
कर्पूराद्यैर्यथाशक्ति मुखवश्रसं निवेदयेत्।।

अथवाऽप्यर्चनापीठे स्थापयित्वा यथाविधि।
अर्चयित्वा प्रभूतं च हविस्सम्यङ् निवेदयेत्।।

एवमेवोत्सवं कुर्याद्यथावित्तानुसारतः।
एवं रात्रौ च कृत्वैव---------------।।

**य.४०.८१ - ९५**

पश्चादालयमाविश्य देवदेवं प्रणम्य च।
अलङ्कृत्यैव वस्त्राद्यैश्चान्यैर्नेत्रमनःप्रियम्।।

'वेदाह'मिति मन्त्रेण यानमारोप्य पूर्ववत्।
देवीयुक्तं वियुक्तं वा बलिमार्गे प्रदक्षिणम्।।

कुर्याद्भक्तजनैस्सार्धं सर्वालङ्कारसंयुतम्।
राजचिह्नसमायुक्तं तोयधारापुरस्सरम्।।

ग्रामप्रदक्षिणे काले बलिमार्गं विनान्यतः।
न गच्छेद्यदि चेच्छून्यं परचक्रभयं भवेत्।।

गृहप्रवेशने स्वे स्वे विप्रास्तद्ग्रामवासिनः।
कुर्युर्दीपादिभिस्सार्धं प्रत्युत्थानं ससम्भ्रमम्।।

देवेशं ये तु सेवन्ते ते जनाः पुण्यभागिनः।
पदे पदे क्रतुफलं लभन्त्येते न संशयः।।

कृत्वा प्रदक्षिणं सम्यक् प्रविशेदालयं पुनः।
अवरोप्य यानाद्देवेशमास्थाने विष्टरोपरि।।

संस्थाप्य च समभ्यर्च्य संस्नाप्य कलशोदकैः।
रक्षाबन्धं विसृज्यैव स्नापयेत्पूर्ववत्सुधीः।।

श्वभ्रादादाय देवेशं यागशालां प्रविश्य च।
संस्थाप्य पश्चिमे कुम्भाद्देवीभ्यां सह पूजयेत्।।

कुम्भांश्चक्रादिकानन्यान् देवानपि जनार्दनम्।
हविः सम्मङ्निवेद्यैव शान्तिमग्नौ यजेत्पुनः।।

प्रणम्य देवमादाय देवीभ्यां सह पूर्ववत्।
जीवस्थाने प्रतिष्ठाप्य प्रणम्यैवानुमानयेत्।।

कौतुकं यदि तत्काले वेद्यां संस्थाप्य पूर्ववत्।
समाराध्य च पूर्वोक्तं ध्रुवे चारोपयेत् क्रमात्।।

औत्सवं यदि चेन्नैवमत्रोद्वासनविग्रहः।
यावत्तीर्थावसानं स्यात्तावुभौ नाचरेद् बुधः।।

यदि चेत्सर्वनाशः स्याद्विसर्गावाहनद्वयम्।
कर्म तन्मध्यमे सद्यो विच्छिन्नं स्यात्तथोत्सवे।।

प्रथमेऽहनि सायाह्ने एवमेव विधानतः।
कारयित्वा समाप्त्यैव प्रणाममपि कारयेत्।।

**अ.२९**

आम्लेन शोधयेद्बिम्बं स्नापयेद्गन्धवारिणा।
प्लोतवस्त्राम्बरं चैव वस्त्रयुग्मं सुयोजयेत्।।

वस्त्रं मृदु नवं चैव कौशेयं तान्तवं हि वा।
हीनं च स्फुटितं दीर्घं पुराणं च विवर्जयेत्।।

चित्रकक्ष्यासमायुक्तं मुक्तादामसमायुतम्।
नानाभूषणसंयुक्तं नानारत्नसमायुतम्।।

गन्धैर्माल्यैरलङ्कृत्य धूपदीपसमायुतम्।
सर्ववाद्यसमायुक्तं सर्वालङ्कारशोभितम्।
गजयन्त्रैश्च यन्त्रैश्च चक्रवाकाख्यहंसकैः।।

नानावस्त्रसमायुक्तं नानालङ्कारसंयुतम्।
अप्सराणामलङ्कृत्य छत्रारोपणमाचरेत्।।

गेयनृत्तसमायुक्तं वाद्यध्वनिसमायुतम्।

विमानस्याग्रतश्चैव यानं चैव सुसन्यसेत्।।

'प्रतद्विष्णुस्तवत' इति यानस्थं देवसंस्थितम्।
यानेष्वारोपयेद्देवमालयं च प्रदक्षिणम्।।

देवीभ्यां सहितं वाथ रहितं वा यथोचितम्।
नृत्तगेयसमायुक्तं वाद्यध्वनिसमायुतम्।।

धूपदीपसमायुक्तं स्तोत्रध्वनिसमायुतम्।
सर्वालङ्कारसंयुक्तं पश्चाद्ग्रामं प्रवेशयेत्।।

नगरे च तथा कुर्यात् पत्तनादौ तथैव च।
प्रदक्षिणं ततः कृत्वा वीथीमभ्यन्तरं क्रमात्।।

बाह्यवीथीः पुरा कुर्यात् गत्वा चैव प्रदक्षिणम्।
भक्ष्याणि विविधांश्चैव देवाय च गृहे गृहे च।।

प्रकुर्वीत यथाशक्ति यथान्यायसमन्वितम्।
ताम्बूलादि निवेद्यैव यानस्थं देवीसंयुतम्।।

भक्ष्यान्वितं निवेद्यैव देवमानम्य चादरात्।

**खि.३२.१३४ - १४८**

रङ्गे वा शिबिकायां वा वस्त्रमाल्यादिशोभिते।
रथे वाऽऽरोप्य यत्नेन 'प्रतद्विष्णु'रिति ब्रुवन्।।

चामरैर्व्यजनैरन्यैः छत्रैः पिञ्छैस्समन्वितम्।
ग्रामं प्रदक्षिणीकुर्याद्वाद्यघोषसमन्वितम्।।

तत्राऽचार्यं पुरस्कृत्य वेदस्तुतिपरायणाः।
नृत्तगेयमहावीणागीतवादित्रवादकाः।।

अनुगच्छेयुरानन्दवशास्ते सिद्धिमाप्नुयुः।
उत्सवे येऽनुगच्छन्ति चतुर्वर्णसमुद्भवाः।।

ते सर्वे वैष्णवा ज्ञेयाः स्पर्शदोषोऽत्र नो भवेत्।
अन्नं भक्ष्याणि पक्वानि भोज्यानि विविधानि च।।

महानसात्सुसिद्धानि समादाय निवेदयेत्।
फलानि नारिकेलञ्च गुलं ताम्बूलमेव च।।

अपक्वानि तु वस्तूनि विना मन्त्रं समर्पयेत्।
देवे तु वाहनारूढे तत्पीठे पूजकस्सदा।।

आसीनोऽप्यथवा तिष्ठन् यथोक्तं पूजयेद्धरिम्।
ततः प्रविश्य चागारं पाद्याद्यैरभिपूज्य च।।

तिष्ठते देवदेवाय घटदीपं प्रदर्शयेत्।
आचार्यो वाऽप्यर्चको वापि हरिद्राचूर्णमिश्रितान्।।

'अतो देवादि' मन्त्रैस्तु अन्नपिण्डान् प्रगृह्य वै।
हस्ताभ्यां देवदेवन्तु परीत्य त्रिः प्रदक्षिणम्।।

भ्रामयित्वा चतुर्दिक्षु क्रमेणैव समुत्क्षिपेत्।
घटकुम्भं समादाय गणिका समलङ्कृता।।

सर्ववाद्यसमायुक्तं कारयेत् त्रिः प्रदक्षिणम्।

पश्चात्पक्वमपक्वं वा भक्ष्यं दद्यात्तदा रहः।।

अन्तः प्रवेशयित्वा च पुण्याहं वाचयेत्ततः।
स्नापयित्वा ततो देवं सन्ध्यापूजां समाचरेत्।।

प्रातःकालेऽर्चनं कृत्वा कारयेत्प्रातरुत्सवम्।
तथा सायार्चनान्ते वै रात्र्युत्सवमथाचरेत्।।

एवमेव क्रमेणैव शिष्टाहेषु च श्रद्धया।
कारयेदुत्सवं सायं प्रातर्देवस्य शार्ङ्गिणः।।

**वा.३२**

रथं वा यात्रायानं वा आलयाग्रे प्रतिष्ठितम्।।

यथामनोहरं स्यात्तु तथा चैवाप्यलङ्कृतम्।
देवदेव्यौ सहानीय स्वस्तिसूक्तं समुच्चरन्।।

तत्र देवं प्रतिष्ठाप्य यानाद्यारोपयेत् क्रमात्।
ताम्रं वाऽप्यायसं वा तु नाराचं योजयेद्दृढम्।।

त्रिपुटे रज्जुभिर्बद्ध्वा 'विष्णुस्त्वा'मिति चोच्चरन्।
सर्ववाद्यसमायुक्तं छत्रपिञ्छाद्यलङ्कृतम्।।

शङ्खकाहलसंघोषैरन्यैस्सुषिरघोषणैः।
चक्रं वा बलिबेरं वा शिष्यः शिरसि धारयेत्।।

आलयं सम्परीत्यैव बलिं दत्वा तु पूर्ववत्।
बलिं दत्वाऽग्रतो गच्छेत् देवेशस्योत्सवैः सह।।

अपक्वं पक्वमादाय प्रोक्षयित्वा विचक्षणः।
अमन्त्रकं निवेद्यैव ब्राह्मणेभ्यो निवेदयेत्।।

अथवान्यजनैर्भक्तैः दत्वा यात्राबलिक्रमः।
प्रलापाद्यन्यकलहं वर्जयेद्देवसन्निधौ।।

एवं शनैः शनैर्गत्वा ग्रामादौ वीथिषु क्रमात्।

दर्शनाकाङ्क्षिणस्सर्वे शूद्राश्चैवान्त्यजातयः।
सर्वान् जनान् समं स्पृष्ट्वा स्मृत्वा तान्वेदपारगान्।।

पदे पदे क्रतुफलं तत्र तत्रैव सिद्ध्यति।
अन्योन्यस्पर्शनाद्दोषो मारुतेन विशुध्यति।।

शङ्कितश्च कृतस्नानी शीघ्रं स नरकं व्रजेत्।
तस्माद्विप्रसमास्सर्वे विष्णोरुत्सवकांक्षिणः।।

शुद्धात्मानो भवेयुश्च विशेषाद्धरिसन्निधौ।
महापातकयुक्ताश्च सर्वे विगतकल्मषाः।।

पदे पदे यज्ञफलं लभेरन् नात्र संशयः।
पश्चाद्देवं समानीय पूर्ववच्चेदलंकृतम्।।

आस्थाने स्थापितं देवं पाद्यमाचमनं ददेत्।
नित्यस्नानोक्तमार्गेण देवेशं स्नापयेत्पुनः।।

उक्तमार्गं समालोड्य सर्वान्भोगान्पदे क्रमात्।
सप्राण्यङ्गपुरीषादि लेपयेद्देशिकोत्तमः।।

नृत्तं गेयं तथा स्तुत्यं पाद्यादीन् सम्यगर्चयेत्।
हविस्समङ्निवेद्यैव शङ्खचक्रादिना सह।।

पानीयं मुखवासादीन् दत्वा देवमनुस्मरन्।
उपलाल्य च भक्तानां गीर्भिस्सन्मानपूर्वकम्।।

औपचारिकमन्त्रान्ते कार्यं विज्ञापयेत् प्रभोः।
तत्कार्यं वैष्णवानान्तु क्रमयेत्पूजकः स्वयम्।।

तस्मात्सर्वप्रयत्नेन दिव्यवाक्यं न लंघयेत्।
पश्चादग्निं परिस्तीर्य उक्तवद्देशिकोत्तमः।।

वैष्णवं विष्णुसूक्तं च पुरुषसूक्तयुतं यजेत्।
श्रीभूसूक्तं च हुत्वा तु दिग्देवत्यसमन्वितम्।।

अथान्तः परिषेकं च कृत्वा तत्र व्रजेद्गुरुः।
तथैव चापराह्णे तु दिवा चैवोत्सवं चरेत्।।

**क्रि.१४.८५ - ८८ ; १२६ - १३३; १४१ - १४७ ; १५२ - १६५**

रथे वा शिबिकायां वा वीशयन्त्रेऽथवा हरन्।।

गजयन्त्रान्दोलिकासु डोलायन्त्रेऽथवा पुनः।
'अहमेवे'ति मन्त्रेण देवमारोप्य निश्चलम्।।

अष्टोपचारैरभ्यर्च्य लाजापूपादिकानि च।
संस्कृतान् गुडसंमिश्रान् निवेद्य मुखवासकम्।।

दत्वा, वाद्यैस्समायुक्तं सर्वालङ्कारसंयुतम्।

मुखवासं निवेद्यैव वीथीश्चापि नयेद्बुधः।।

-----------------------------------

द्विकालमेककालं वा उत्सवः क्रियते यदि।
यानारूढे देवदेवे रथ्यास्वानायितेपि च।।

दासीभिर्वादकैश्चैव नृत्तगेयसमन्वितैः।
सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम्।।

ब्राह्मणैर्विष्णुभक्तैश्च भाषास्तुतिपरायणैः।
पुराणस्तुतिपाठैश्च वास्तुशास्त्रपरायणैः।।

एतैस्सर्वैस्समायुक्तम् अग्रे चोत्सवमाचरेत्।
ध्वजैश्छत्रैरातपत्रैः तोरणैश्च तथैव च।।

यानि शृङ्गारचिह्नानि प्रभुचिह्नानि यानि च।
गृहीत्वा तानि चिह्नानि ब्राह्मणाः शुचयस्तथा।।

देवस्याग्रे तु गच्छेयुः सर्वालङ्कारसंयुताः।
तेषामपरभागे तु यानाधिष्ठितकेशवम्।।

सर्वालङ्कारसंयुक्तं सर्वाभरणभूषितम्।
रक्तैः पीतैस्सितैश्चैव निबद्धैः कनकाम्बरैः।।

हेमदण्डसमायुक्तैः चामरैर्व्यजनैस्तथा।
दासीभिर्विष्णुभक्तैर्वा पार्श्वयोः वीजयेत् क्रमात्।।

-----------------------------------

वेदाध्ययनमन्यच्च मङ्गलस्तुतिपाठनम्।
वेदस्यापरभागे तु विशेषेण समाचरेत्।।

ब्राह्मणा विष्णुभक्ताश्च होत्रध्वर्युपुरस्सराः।
देवेशमनुगच्छेयुः वेदाध्ययनतत्पराः।।

एषामपरभागे तु देवस्य तु विशेषतः।
गजपृष्ठे समारोप्य दुन्दुभिः झल्लरीं तथा।।

घोषयित्वाऽनुगच्छेयुः वादका दृढवादनाः।
एवं प्रदक्षिणं कृत्वा प्रथमावरणादिषु।।

बहिरावणे वाथ ग्रामं कुर्यात् प्रदक्षिणम्।
सन्धौ सन्धौ तु देवेशं पाद्याद्यैरष्टविग्रहैः।।

निवेदयेत् समभ्यर्च्य मुखवासं समन्त्रकम्।
तदा वस्तून्यपक्वानि ब्राह्मणैराहृतान्यपि।।

दद्याद्भक्ष्याण्यपक्वानि पक्वं विप्राहृतं तथा।
शुद्धेन वारिणा प्रोक्ष्य अमन्त्रं च निवेदयेत्।।

---

एवं प्रदक्षिणं कृत्वा पुनरन्तः प्रविश्य च।।

आस्थाने देवमास्थाप्य विष्टरे सोत्तरच्छदे।
पाद्यमाचमनं दत्त्वा नीराजनमतश्चरेत्।।
जलेन सहितं पात्रं शाल्यन्नं पुष्पसंयुतम्।

आचार्यश्चाग्रतः स्थित्वा देवदेवस्य मूर्धतः।।

पादान्तं भ्रामयेत्पात्रं शनकैः त्रिः प्रदक्षिणम्।
हरिद्रासहितं तोयं शाल्यन्नं पुष्पसंयुतम्।।

कांस्यपात्रे समापूर्य दासीभिः भ्रामयेत्तथा।
आचूडात्पादपर्यन्तं भ्रामयेदिति चाङ्गिराः।।

द्वारबाह्ये विसृज्यैव रक्षां कृत्वा ललाटके।
आस्थाने देवमास्थाप्य विष्टरे सोत्तरच्छदे।।

पाद्यमाचमनं दत्वा नारिकेलफलाम्बु च।
अपूपसक्तुलाजादिभक्ष्याणि विविधानि च।।

निवेद्याष्टाक्षरेणैव मुखवासं निवेदयेत्।
नीराजनक्रियान्ते तु देवस्य जयशंसिभिः।।

नानाभाषाप्रबन्धैश्च स्तुतिं स्तोत्रैः प्रकल्पयेत्।
(दर्शयेद्देवदासीभिः मार्गनृत्तं ततः क्रमात्।।)

शुद्धस्नानोक्तमार्गेण स्नापयित्वा ततः परम्।
समभ्यर्च्य निवेद्यैव जीवस्थाने निवेशयेत्।।

अत्र केचित्प्रशंसन्ति क्षमस्वेति नमेदिति।
देवस्य दक्षिणे वापि प्रमुखे वा महासने (?)।।

मन्दिरं सुन्दरं कृत्वा दृढबद्धकवाटकम्।
अन्तर्गृहस्य परितः दर्पणादि निवेश्य च।।

तन्मध्ये देवदेवेशं प्रतिष्ठाप्य समर्चयेत्।
अत्रानुक्तानि सर्वाणि खिलोक्तविधिना चरेत्।।

एवमेवोत्सवः प्रोक्तः दिनयोः प्रथमान्त्ययोः।
द्विकालमेककालं वा दिनेष्वन्येषु चोत्सवम्।।

## ७.११.२ भगवतो वीथीभ्रमणानन्तरमुपचारः

### वा.३२

[1]पश्चाद्देवं समानीय पूर्ववच्चाप्यलङ्कृतम्।
आस्थाने स्थापयित्वा तु पाद्यमाचमनं ददेत्।।

नारिकेलफलैरन्यैः मन्दतक्रं निवेदयेत्।
आचामं च ततः कृत्वा ताम्बूलं च निवेदयेत्।।

नित्यस्नानोक्तमार्गेण देवेशं स्नापयेत् पुनः।
उक्तमार्गं समालोच्य सर्वं भोगं ददेत्क्रमात्।।

सप्राण्यङ्गपुरीषादीन् लेपयेद्देशिकोत्तमः।
नृत्तं गेयं तथा वाद्यं पाद्यादीन् सम्यगाचरेत्।।

हविः सम्यङ्निवेद्यैव वीशं चक्रादिना सह।
पानीयमुखवासादीन् दत्वा देवमनुस्मरन्।।

उपलाल्य च भक्तानां प्रीतिसम्मानपूर्वकम्।

1. पश्चात् - यात्रानन्तरम्।

औपचारिकमन्त्रान्ते कार्यं विज्ञापयेत् प्रभोः।।

तत्कार्यं वैष्णवानां तु श्रावयेत् पूजकः स्वयम्।
तस्मात्सर्वप्रयत्नेन दिव्यं वाक्यं न लङ्घयेत्।।

### ७.११.३ वादकादीनां गन्धर्वादिभावना

**क्रि.१४.१५० - १५२**

वादकान् नर्तकादींश्च गन्धर्वान् भावयेत्सदा।
जयाद्यप्सरसश्चैव भावयेद्देवयोषितः।।

स्त्रियौ चामरधारिण्यौ मायां संह्लादिनीं स्मरेत्।
किष्किन्धसुन्दरौ वाथ पुरुषौ यदि तौ स्मरेत्।।

स्मरेत् गरुडवत्सर्वान् रथयन्त्रादिवाहकान्।

### ७.११.४ अस्पृश्यस्पर्शस्नाननिषेधः

**क्रि.२६.१०९ - १११**

विष्णोरुत्सवसेवार्थम् आगताः तत्र ये जनाः।
ते तु विप्रसमास्सर्वे प्रतिलोमादयोपि च।।

तस्मादस्पृश्यसंस्पर्शः न दोषाय प्रकल्पते।
उत्सवे देवदेवस्य यः स्नाति स्पर्शहेतुना।।

स्वर्गस्थाः पितरस्तस्य पतन्ति नरके ध्रुवम्।

**वा.३२ ; खि.३२.१३७, १३८**

**वि.५३.३५३**

उत्सवे देवेशं ये सेवन्ते ते सर्वे पदेपदे यज्ञफलं लभेरन्निति भृग्वादयो वदन्ति। तस्मादस्पृश्यस्पर्शनं न दोषाय भवेत्।

### ७.११.५ ग्रामप्रदक्षिणानन्तरं देवप्रत्यागमनविलम्बे नित्यार्चनम्

**प्र.२७.३८२, ३८३**

यानात्काले यागशालां देवे न प्रतिगच्छति।।

भवेन्नित्यार्चनं तत्र यत्र देवोधिवासितः।

ध्रुवार्चनं यथापूर्वं न तत्रास्ति व्यतिक्रमः।।

### ७.११.६ शिबिकाद्यभावे उत्सवप्रतिषेधः

**क्रि.२६.९७, ९८**

रथरङ्गे डोलिकायां शिबिकायामथापि वा।।

हीनेषु देवदेवस्य चान्यालङ्करणेषु च।

हविषि द्विगुणे हीने चोत्सवं नाचरेद्बुधः।।

### ७.११.७ देवदर्शनफलम्

**नि.२९**

देवस्यालोकनेनैव श्रीरारोग्यं प्रजास्तथा।।

धनधान्यादि सर्वस्य सम्भवश्च भवन्ति च।

अशुभानि च सर्वाणि विनश्यन्ति न संशयः।।

क्रूरदृष्टिविनाशाय वेदवैदिकवर्धनम्।
सर्वपापानि नश्यन्ति समस्तदुरितापहम्।।

एवमाद्याश्च दोषास्तु विनश्यन्ति न संशयः।
तत्मात्सर्वप्रयत्नेन प्रणम्य च मुहुर्मुहुः।।

-----------------------------------।

देवेशं ये तु सेवन्ते ते जनाः पुण्यभागिनः।
सर्वयज्ञफलञ्चापि लभते नात्र संशयः।।

सर्वसम्पत्समृद्धिः स्याद्देवस्यालोकनेन वै।
सर्वेऽशुभाश्च नश्यन्ति------ श्चोपसर्वतः।।

**स.५५.७३, ७४**

★★★

# १२. द्वितियाहः प्रभृत्युत्सवाः

## ७.१२.१ द्वितीयाहः प्रभृति उत्सवाचरणम्

**य.४१.१ - ६५**

द्वितीयाहं समारभ्य प्रातरर्चावसानके।
कुम्भानाराध्य विधिवद्धविः सम्यङ्निवेदयेत्।।

पश्चात्प्रणम्य देवेशं देव्यौ नैव विचक्षणः।
याने वा डोलके वाऽथ समारोप्यैव राजवत्।।

आस्थानमण्डपे वाऽथ स्नपनालय एव वा।
भक्तैः सर्वजनैस्सार्धं राजवत्सम्प्रवेशयेत्।।

अत्रैव पूर्ववद्धीमान् कल्पयेच्चतुरासनम्।
पूर्वोक्तं समलङ्कृत्य तापसे स्थापयेत्पुनः।।

स्नानात्पूर्वोपचाराणि कुर्यात्सर्वाणि तत्र वै।
स्नानाङ्गानि च सर्वाणि कारयेदासुरे तथा।।

ततः क्रमेण देवेशं प्लोतवस्त्रान्तमेव च।
योगासने समारोप्य वस्त्राद्यैरपि भूषयेत्।।

पुनरर्घ्यान्तमभ्यर्च्य पाद्याद्यं पूर्वमन्त्रतः।
अक्षताङ्कुरदूर्वाश्च साम्बुना पूर्वहाटके।।

पात्रे तस्मिन्त्समभ्यर्च्य सोमं पश्चात्प्रगृह्य च।
प्रणवाकृतिवद्धीमान् मौलेरुपरि वैष्णवैः।।

प्रदक्षिणं समावर्त्य शिष्यहस्ते ददेत्पुनः।
साक्षतं पुष्पमादाय मुष्टिमात्रं विशेषतः।।

मुकुटोपरि सत्कृत्वा प्रदक्षिणं विसृजेद्दिशि।
वेदानामपि तृप्त्यर्थं नमोन्तं वेदमूर्तिना।।

'विष्णुस्त्वामि'ति मन्त्रेण दर्पणं दर्शयेत्पुनः।
'देवस्य त्वे'ति मन्त्रेण रक्षां कृत्वाथ चाक्षतैः।।

छत्रं तेनैव दत्वाऽन्ते चामरादिपरिच्छदान्।
संयोज्य परितो धीमान् वेदानध्यापयेत्क्रमात्।।

पुराणस्तोत्रसूत्राणि कल्पं च विदिशासु च।
प्रमुखे गेयनृत्ते च कृत्वा चान्यैश्च घोषयेत्।।

द्विप्रस्थं तण्डुलं पात्रे तिलं प्रस्थं प्रगृह्य च।
प्रस्थपादं घृतं चैव ताम्बूलं सम्प्रगृह्य च।।

देवस्य दर्शनार्थाय दूर्वामुष्टिं पृथक् पृथक्।
पात्रे सङ्गृह्य देवस्य प्रमुखे सन्न्यसेत्क्रमात्।।

ऋग्वेदं तण्डुलेऽभ्यर्च्य यजुर्वेदं तिले तथा।
घृते साम त्वथर्वाणं ताम्बूले पूजयेत्क्रमात्।।

दूर्वायां चक्रमभ्यर्च्य तामादाय च मन्त्रवित्।
देवं प्रदक्षिणं तेन कृत्वा गोभ्यः प्रदापयेत्।।

तत्तद्वेदविदो विप्रान्समाहूयाग्रतो हरेः।
अर्चनोक्तप्रकारेण मण्डलं च ददेत्क्रमात् ?।।

ताम्बूलं च ददेत्पश्चात्पुराणाद्यं च भूसुराः।
संस्तूय पश्चाद्देवेशं प्रणामं कारयेद्गुरुः।।

पाद्यमाचमनं पश्चाद्दत्वाऽत्र प्रमुखे तथा।
मण्डलं चोपलिप्यैव प्रभूतं पूर्ववद्ददेत्।।

प्रणम्यैवानुमान्यैव देवमादाय चाऽऽसनात्।
सकृत्प्रदक्षिणं कृत्वा यागशालां प्रवेशयेत्।।

वेद्यास्तु पश्चिमे भागे विष्टरे समलङ्कुते।
संस्थाप्य देवदेवेशं समभ्यर्च्याष्टविग्रहैः।।

तत्तत्कुम्भान् समाराध्य देवानन्यान् त्सपार्षदान्।
समभ्यर्च्य हविः सम्यङ्निवेद्य मुखवासकम्।।

दत्वा सभ्यं समासाद्य परिषिच्य च पूर्ववत्।
तद्दिनाधिपदैवत्यं पूर्वोक्तं मन्त्रमेव च।।

हुत्वान्ते बलिमादाय चक्रवीशामितैः सह।
बलिबिम्बसमायुक्तमन्नदेवसमायुतम्।।

सर्वालङ्कारसंयुक्तं पूजयेत्तु यथाविधि।
धात्रादिभूतपर्यन्तं परिषद्भ्यो बलिं ददेत्।।

पश्चाद्ग्रामं प्रविश्यैव बलिं निर्वाप्य पूर्ववत्।
पुनरालयमाविश्य भूतपीठे समाचरेत्।।

पादौ प्रक्षाल्य चाचम्य देवदेवं प्रणम्य च।
संस्नाप्यैव चक्रादीन् शालायां सन्न्यसेत्तथा।।

हविर्भिः सन्निवेद्यैव पावकं च सुरक्षयेत्।
पुनर्देवं समादाय योगस्थानान्मनोरमे।।

मण्डपादौ सुसन्न्यस्य वस्त्रैश्च विविधैरपि।
हाराद्याभरणैरन्यैः पुष्पमालादिभिः क्रमात्।।

समलङ्कृत्य देवेशं हविश्चैवात्र राजवत्।
निवेद्यैव यथाशक्ति दधि चात्र निवेदयेत्।।

मर्दयेच्चन्दनेनैव देवहस्तौ पुनर्गुरः।
बहुलं मुखवासं च दत्वा देवं प्रणम्य च।।

स्वस्तिगानसमायुक्तं भक्तैरन्यैस्समावृतम्।
राजवच्छिबिकायां च समारोप्यैव मन्दिरम्।।

सकृत्प्रदक्षिणं कृत्वा ग्रामवीथिं प्रवेशयेत्।
पुनस्तदासनाद्देवं शिबिकायां रथेऽथवा।।

तुरगे वा गजे वाऽथ देवं संस्थाप्य राजवत्।

प्रणम्य मुखवासं च दत्वा शृङ्गारसंयुतम्।।

ग्रामप्रदक्षिणं कृत्वा धाममात्रगतेऽपि वा।
नाभिवीथ्यां यदि भवेद्ब्रह्मस्थानं प्रदक्षिणम्।।

कृत्वा पश्चान्महावीथिं बलिमार्गेण राजवत्।
कृत्वा प्रदक्षिणं पश्चादालयं सम्प्रवेशयेत्।।

अवरोप्य यानाद्देवेशं पश्चाद्धामप्रदक्षिणम्।
कृत्वा पूर्ववद्धीमानास्थाने स्थापयेत्ततः।।

राजवत्सम्प्रणम्यैव पाद्यं दत्वाऽथ पादयोः।
कुर्यादाचमनं तत्र मुखवासं ददेत्पुनः।।

यवनिकया तिरस्कृत्य पाद्याद्यर्घ्यान्तमेव च।
पूजयित्वाऽथ देवेशं जह्याद्यवनिकां पुनः।।

नीराजनं च पूर्वोक्तं दासीभी राजवत्सुखम्।
कृत्वान्ते मुखवासं च बहुलं सन्ददेत्पुनः।।

लोकयात्राकथाश्चान्या भक्तैर्विज्ञापयेद्गुरुः।
तत्तदुक्तानि वाक्यानि गुरुस्तत्स्वयमेव च।।

श्रावयेत्तस्य वाक्यं च विष्णोर्वाक्यमिति स्वयम्।
स्मृत्वोक्तानि च कार्याणि सर्वे कुर्युश्च पण्डिताः।।

प्रणम्यैव गुरुः पश्चान्माल्यादीन्त्सम्प्रगृह्य च।
विष्वक्सेनं प्रपूज्यैव वस्त्रैरन्यैश्च शिष्टकैः।।

मुखवासं पुनर्दत्वा श्वेतवस्त्रेण बुद्धिमान्।
स्कन्धोपरि समाच्छाद्य अलकान्त्संविकीरयेत्।।

तैलं शिरसि संस्राव्य राजवन्मर्दयेत्पुनः।
शनैस्तदलकान् बध्य पुष्पमालां च वेष्टयेत्।।

विसृज्य स्कन्धवस्त्रं तदङ्गेष्वभ्यञ्जनं शनैः।
कृत्वा देवं प्रणम्यैव चन्दनेनानुलेपयेत्।।

मुखवासं च दत्वान्ते स्नानार्थं सम्प्रणम्य च।
संयोज्य पादुके पश्चाद्राजवत्पादयोरपि।।

हस्ताभ्यां देवमादाय स्थापयेदासुरे पुनः।
पाद्यमाचमनं दत्वा पूर्वोक्तविधिना बुधः।।

संस्नाप्य गन्धतोयेन प्लोतेन विमृजेत्ततः।
योगासने समारोप्य समलङ्कृत्य पूर्ववत्।।

गेयनृत्तावसानान्ते हविः सम्यङ्निवेदयेत्।
महाहविर्यदि भवेत्पूर्वोक्तं सम्प्रकल्प्य च।।

तस्य पश्चिमभागे तु संस्थाप्य प्रभुमव्ययम्।
निवेदयित्वा पूर्वोक्तं पानीयाचमने तथा।।

दत्वा तस्मात्समादाय स्थापयेत्परमासने।
अपूपादीनि भक्ष्याणि चान्यानि विविधानि च।।

बहुभिर्नालिकेरैश्च विष्णुगायत्रिया बुधः।
निवेद्य विधिना पश्चाद्गन्धं दत्वाऽथ पूर्ववत्।।

मुखवासं च दत्वान्ते प्रणाममपि कारयेत्।
कथाभिस्तत्पुराणैश्च वेदैर्वाद्यैर्विशेषतः।।

विनोदं कारयित्वान्ते देवमादाय पूर्ववत्।
सकृत्प्रदक्षिणं कृत्वा यागशालां प्रवेशयेत्।।

पूर्वस्थाने सुसंस्थाप्य समभ्यर्च्य हविर्ददेत्।
कुम्भानन्यान्निवेद्यैव होमं कृत्वा पुनस्तथा।।

चक्रमेकं समादाय बलिद्रव्यं प्रगृह्य च।
बलिं निर्वाप्य पूर्वोक्तमालयं सम्प्रवेशयेत्।।

देवं प्रणम्य पूर्वोक्तमलङ्कृत्य मनःप्रियम्।
रथे वा शिबिकायां वा समारोप्य च पूर्ववत्।।

ग्रामप्रदक्षिणं कृत्वा मन्दिरं संप्रविश्य च।
यानादादाय देवेशं कृत्वा धामप्रदक्षिणम्।।

संस्नाप्य स्नानवेद्यां च वस्त्रमाल्यं विसृज्य च।
पाद्यमाचमनं दत्वा पूर्वोक्तविधिना बुधः।।

गन्धोदैरभिषिच्यैव प्लोतं दत्वाऽथ पूर्ववत्।
तस्मादादाय देवेशं जीवस्थाने विशेषतः।।

संस्थाप्यैव समभ्यर्च्य देवीभ्यां सह चाव्ययम्।
हविः सम्यङ्निवेद्यैव मुखवासं ददेत्पुनः।।

'अपराधं क्षमस्वे'ति देवदेवं प्रणम्य च।
स्वे स्वे स्थाने च चक्रादीन् स्थापयेन्मतिमान् बुधः।।

द्वितीयाहः प्रभृत्येवं सायं प्रातर्दिने दिने।
प्रातर्नित्यार्चनस्यान्ते द्विगुणार्चनमाचरेत्।।

**स.५५.८२ - ८५**

---------------------द्वितीयाहः प्रभृत्यपि।।

प्रातः सन्ध्यार्चनान्ते च सायमर्चान्त एव च।
अर्चयित्वा हवींष्येवं निवेद्यैव विशेषतः।।

होमं हुत्वा बलिं दत्वा देवस्योत्सवमाचरेत्।
आदौ रात्रिक्रमेणैव द्विकालं सर्वमाचरेत्।।

एवमेवाचरेन्नित्यं सायं प्रातस्तथोत्सवम्।

**अ.२९**

द्वितीये तु दिने चैवं प्रातस्सन्ध्यार्चनान्तरे।।

बलिं दत्वा यथान्यायं तत्काले चोत्सवं नयेत्।
तथा सायार्चनान्तेषु बलिं दत्वा यथाविधि।।

तत्काले चोत्सवं कुर्यात् सायार्थं तु विशेषतः।
सायं प्रातस्तथार्चान्ते सायं प्रातस्तथोत्सवम्।।

कारयेदथवा धीमान् बलिं दत्वा यथाविधि।
अथवा पररात्रे च कारयेदुत्सवं यथा।।

अथवा प्राप्तकाले तु बलिं दद्यात् यथाक्रमम्।

**प्र.२५.१९१, १९२**

द्वितीयाहः प्रभृत्येव सायं प्रातश्च नित्यशः।
नित्यार्चनान्ते द्विगुणम् अर्चयेच्च निवेदयेत्।।

कुम्भदेवान् समाराध्य ध्वजदेवार्चनं चरेत्।
होमं बलिं च दत्वा तु कारयेदुत्सवं तथा।।

### ७.१२.२ अशक्तानां द्वितीयादिदिनकृत्यम्

**य.४१.६६, ६७**

एवं कर्तुमशक्तश्चेत्पूर्ववद्द्विगुणार्चनम्।
हविर्निवेदनं होमं कुम्भदेवसमर्चनम्।।

बलिदानं तथा कृत्वा द्विकालं चाथवाव्ययम्।
एककाले च सायाह्ने चोत्सवं कारयेत्तथा।।

**वि.५४.३५४**

[1]एवं कर्तुमशक्तश्चेत्, पूर्ववत् द्विगुणार्चनं हविर्निवेदनं कुम्भदेवाराधनं होमं बलिदानं च द्विकालं कृत्वा, देवेशं सायाह्ने [2]पूर्ववदलङ्कृत्य, उत्सवं कारयेदिति।

### ७.१२.३ नवाहोत्सवे वाहनक्रमः

**खि.३२.१२९ - १३३**

(प्रथमेऽह्नि प्रभायां वा हंसे वाऽऽरोहयेत्प्रभुम्।
कण्ठीरवे द्वितीये तु तृतीये तु हनूमति।।

तुरीये पक्षिराजे स्यादनन्ते पञ्चमेऽहनि।
षष्ठेऽहनि गजेन्द्रे तु रोपयित्वोत्सवं चरेत्।।

---

1. उत्सवविधानानुसारम्।

2. उत्सवोक्तमार्गेण।

सप्तमेऽहनि मध्याह्ने निशाचूर्णेन स्नापयेत्।
प्रभायामुत्सवं कुर्यात्सायंकाले विशेषतः।।

विमाने पुष्पके रात्रौ तुरगेन्द्रे तथाऽष्टमे।
नवमे देवदेवस्य प्रभाते स्याद्रथोत्सवः।।

शिबिकान्दोलिकाव्यालपुन्नागा गोपवर्धनम्।
सायमेवं तथा प्रातरुत्सवे स्याद्दिने दिने)।।

## ७.१२.४ एकविंशत्युत्सवे प्रत्यहं वाहनक्रमः

**क्रि.१४.८९ - १०६**

उत्सवे देवदेवस्य वाहनक्रम उच्यते।
प्रथमे चोत्सवे प्रातः शुकवाहनमाचरेत्।।

तद्रात्रौ देवदेवस्य हंसवाहनमाचरेत्।
द्वितीये दिवसे चैव मृगेन्द्रं शरभं चरेत्।।

कपीन्द्रं च प्रभां चैव तृतीये चोत्सवं चरेत्।
चतुर्थे दिवसे चैव कल्पकं पञ्चगं ? चरेत्।।

पञ्चमे चोत्सवे चैव पक्षीशं चार्धचन्द्रकम्।
षष्ठेऽह्नि चोत्सवे प्राप्ते गजं पाशिं ? तथैव च।।

सप्तमे चोत्सवे चैव पुष्पकं कमलं चरेत्।
अष्टमे चोत्सवे प्राप्ते डोलामश्वं समाचरेत्।।

नवमे दिवसे चैव विमानं यानमाचरेत्।

दशमे चोत्सवे प्राप्ते शिबिकारोहणं चरेत्।।

तद्रात्रौ च महोत्सेधं गजलक्ष्मीं प्रकल्पयेत्।
एकादशदिने प्रातः कच्छपं वाहनं चरेत्।।

तद्रात्रौ तु महोत्सेधं पुन्नागं वाहनं चरेत्।
द्वादशे तु दिने प्रातः कृष्णसारं समाचरेत्।।

तद्रात्रौ तु महारूपं मत्स्यवाहनमाचरेत्।
त्रयोदशदिने प्रातः कूर्मयन्त्रं प्रकल्पयेत्।।

तद्रात्रौ तु विशेषेण श्रीभूमिसहितं तथा।
तल्पे चैव समारोप्य उत्सवं तु समाचरेत्।।

चतुर्दशदिने प्रातः कौतुकं रथमाचरेत्।
तद्रात्रौ तु महारूपं शार्दूलं वाहनं चरेत्।।

सप्ताष्टदिवसे प्रातश्चरेत् कुण्डलिवाहनम्।
तद्रात्रौ तु शुभाकारं गण्डभेरुण्डमाचरेत्।।

षोडशे दिवसे प्रातः प्रभापीठं प्रकल्पयेत्।
तद्रात्रौ तु महारूपमैन्द्रं च परिकल्पयेत्।।

नवाष्टदिवसे प्रातर्गिरिवाहनमाचरेत्।
तद्रात्रौ तु शुभाकारं पनसं वाहनं चरेत्।।

अष्टादशदिने प्रातः कालियं वाहनं चरेत्।
तद्रात्रौ तु विशेषेण चक्रवाहनमाचरेत्।।

एकोनविंशदिवसेऽप्यातपं वाहनं चरेत्।

तद्रात्रौ तु महोत्सेधं पारिजातं प्रकल्पयेत्।।

दिने विंशतिके प्रातर्ध्वजवाहनमाचरेत्।
तद्रात्रौ तु महारूपं शङ्खवाहनमाचरेत्।।

एकविंशदिने प्रातः रथयात्रां समाचरेत्।
इत्येवं वाहनं प्रोक्तं क्रमेणैवोत्सवं चरेत्।।

### ७.१२.५ गरुडोत्सवः

**प्र.२५.१९३**

तृतीये पञ्चमे वाह्नि प्रातः स्याद्गरुडोत्सवः।

### ७.१२.६ गजवाहनम्

**क्रि.१४. १३६ - १४०**

आरोहणे गजेन्द्रस्य देवदेवं विशेषतः।
वस्त्राभरणपुष्पाद्यैरलङ्कृत्य यथार्हकम्।।

देवेशं पूर्वमारोप्य पृष्ठपार्श्वे गजस्य तु।
आदायाङ्कुशमाचार्यो गजपृष्ठे निषीदति।।

अर्चकश्छत्रमादाय मुक्तालङ्कारभूषितम्।
देवस्यापरभागे तु भृगुवत्स निषीदति।।

गरुडादिषु यानेषु शिबिकासु तथैव च।
आसीनः पूर्वभागे तु दक्षिणे देशिकोत्तमः।।

देवेशं मनसा ध्यायन् वैष्णवं मन्त्रमुच्चरन्।
आसीतैवान्यथा कुर्यादुत्सवो निष्फलो भवेत्।।

### ७.१२.७ यानवाहकगुणाः

**क्रि.१४.१३४, १३५**

षोडशैरष्टभिश्चैव चतुर्भिर्वा यथोचितम्।
विप्राद्यैर्वाहनीयः स्यात् देवदेवो हरिः प्रभुः।।

शुद्धाः स्नाताः समागत्य सवर्णा ब्राह्मणादयः।
यानं स्कन्धे निवेश्यैव प्रचरेयुश्शनैश्शनैः।।

**प्र. २५. १९३ - १९५**

षष्टेऽहनि तु मध्याह्ने देवीभ्यं सहितं हरिम्।।

पीठमध्ये समारोप्य समभ्यर्च्याऽष्टविग्रहैः।
जलकुङ्कुममादाय कारयेदुत्सवं तथा।।

नववस्त्रादिकं दत्वा पुधुकानि निवेद्य च।
दत्वा ताम्बूलमाचाममर्चयेद्राजवत् प्रभूम्।।

### ७.१२.८ सप्तर्षिपूजनम्

**प्र.२५.१९६ - १९८**

सप्तमे [1]प्रातरर्चान्ते कुर्यात् सप्तर्षिपूजनम्।
वृणुयाद्द्विजः सप्त तदाचार्यपुरस्सरान्।।

ध्यात्वा सप्तर्षिवत्तांस्तु स्वर्णं गामाज्यमेव च।
तण्डुलोदककुम्भादीन् दूर्वाग्रं क्रमकं तथा।।

दद्यात्प्रभूतं तेभ्यस्तु ब्राह्मणेभ्यः पृथक् पृथक्।

---

1. नवाहोत्सवस्य इत्यध्याह्रियते।

## ७.१२.९ कृष्णगन्धानुलेपनोत्सवः

**प्र.२५.१९८ - २०३**

[1]तत्सायं च विशेषेण कृष्णगन्धानुलेपनम्।।

सद्यः प्रतिसरं बद्ध्वा देवाग्रे स्थण्डिलं चरेत्।
कृष्णागुरु समादाय सर्ववाद्यसमायुतम्।।

ग्रामं प्रदक्षिणं कृत्वा स्थण्डिलोपरि विन्यसेत्।
पुण्याहं विधिवत्कृत्वा श्रियमावाह्य तत्र च।।

संस्कृत्य विधिवद्गन्धान् समभ्यर्च्य हरिं ततः।
'गन्धद्वारे'ति मन्त्रेण सर्वाङ्गं लेपयेद्गुरुः।।

देव्यादीनां तथा कुर्यात् तत्तन्मन्त्रैर्यथाविधि।
तच्छेषगन्धं भक्त्यैव भक्तेभ्यो दापयेद्गुरुः।।

तद्गन्धधारणान्नृणां भवेयुः सर्वसम्पदः।

## ७.१२.१० रथयात्रोत्सवः

**प्र.२५. २०३**

[2]सायमर्चावसाने तु रथयात्रां समाचरेत्।

★★★

1. सप्तमे दिने सायमित्यर्थः।

2. सप्तमे दिने सायम्।

# १३. मृगयोत्सवः

## ७.१३.१ मृगयोत्सवकालः

### प्र.२५.२०४

अष्टमे दिवसे प्राप्ते समाप्ते प्रातरुत्सवे।
अलङ्कृत्य तु देवेशं मृगयोत्सवमाचरेत्।।

### य.४२.१

अथ तीर्थदिनात् पूर्वं प्रातस्सन्ध्यार्चनान्तरे।

### क्रि.१४.१७१, १७६

तीर्थाहात्पूर्वदिवसे समाप्ते प्रातरुत्सवे।
----------------------------------।
पूजाकर्मानुरोधेन कुर्यादन्यदिनेष्वपि।।

## ७.१३.२ मृगयोत्सवप्रयोगः

### वा.३२

मृगयात्रां ततो वक्ष्ये शृणुध्वं द्विजसत्तमाः।
सम्पूज्य चैव सप्ताहं देवमानीय मन्त्रवित्।।

यक्षगन्धर्वदैत्यानां पिशाचब्रह्मरक्षसाम्।
अन्येषां च निवृत्त्यर्थं सर्वशत्रुजयावहम्।।

शुनां च पतितानां च श्वपचां पापरोगिणाम्।
वायसानां क्रिमीणां तृप्त्यर्थं च बलिं क्षिपेत्  ।।

'एतत्कर्म क्षमस्वे'ति प्रार्थयेद्विष्णुमव्ययम्।
संस्नाप्य देवमानीय पूर्वोक्तेन विधानतः।।

पुनश्चैवाप्यलङ्कृत्य दर्शनीयं च सुन्दरम्।
अलङ्कारक्रमं वक्ष्ये शृणुध्वं तु यथाक्रमम्।।

क्षौमं वा पट्टसूत्रं वा कौशेयादीनि चाहरेत्।
तत्सूत्रं प्रोक्षयेद्विद्वान् विष्णुगायत्रिमुच्चरन्।।

त्रिगुणीकृत्य सूत्राणि रज्जुं कृत्वा यथार्हकम्।
'विष्णुस्त्वां रक्ष'इत्युक्त्वा तत्र कार्यं समाचरेत्।।

अथवान्यत्र कार्पासतन्तूनाहृत्य कारयेत्।
वस्त्रेषु विविधं रूपं कृत्वा तत्रात्वरन् बुधः।।

सिंहवक्त्रं च कृत्वा तु व्यालाकृतिमथापि वा।
मकराकारवच्चैव पद्मपुष्पदलाकृतिम्।।

उत्पलं कुमुदाकारमन्यपुष्पाकृतिं तथा।
शङ्खचक्राकृतिं कृत्वा शुभहंसाकृतिं तथा।।

अन्यन्मनोरमं कृत्वा यथाशोभं तथा चरेत्।
देवस्योभयपार्श्वे च रज्जुभ्यां बन्धयेद् दृढम्।।

उपरि वस्त्रमाच्छाद्य पुच्छं कृत्वा तु सुन्दरम्।
दृढं धनुश्शरं हस्ते देवस्य कटकं तथा।।

देवस्य हस्ते धृत्वैव कृत्वा तच्छास्त्रपारगाः।
अश्वारूढं गजारूढं यानारूढमथापि वा।।

ग्रामे वा नगरे वापि आरामे च मनोरमे।

देवदेवं समानीय भक्तानां च समाकुलैः।।

आस्फोटनादिकं कृत्वा वेदैःस्तोत्रेण तोषयेत्।
किरीटादियुतं देवं नानापुष्पैरलङ्कृतम्।।

पूर्वोक्तेन क्रमेणैव हविरन्तं तु पूजयेत्।
उक्तहोमं तथा कुर्यात् बलिं दत्वोक्तवत् क्रमात्।।

औत्सवं देवमादाय ग्रामादेश्च प्रदक्षिणम्।
बहिर्वीथ्यां तथा गत्वा ग्रामान्ते तत्र कारयेत्।।

सीमान्तरतरं यात्रां न कुर्यादिति शासनम्।
एवं तत्रोत्सवो ग्रामे मृगयात्रेति कीर्त्यते।।

अथवावभृथात् पश्चात् मृगयात्रोत्सवं चरेत्।
आलयान्तर्गते देवम् आस्थाने स्थितमाचरेत्।।

पाद्यमाचमनं दत्वा मण्डतक्रं निवेदयेत्।
मुखवासं ददेत्तत्र पूर्वोक्तेन विधानतः।।

अन्यत्स्नानादिकं सर्वम् उक्तमार्गेण कारयेत्।

**क्रि.१४.१७२ - १७६**

मृगयार्थमलङ्कृत्य देवदेवं विशेषतः।
अजवानरशार्दूलगजाश्वानुगतं नयेत्।।

नानाप्रहरणोपेतैरन्वितं परिचारकैः।
कण्ठीरवसमारूढे देव्यावप्यानयेद्बुधः।।

ग्रामं प्रदक्षिणीकृत्य बहिश्चापि मनोरमे।
उत्सवं कारयेच्छीघ्रं चक्रवीशामितैर्विना।।

नानाविधोपकार्यासु विनोदं चापि कारयेत्।
अवतारेषु वा चैतत् लौकिकेष्विति केचन।।

वापीतीरोपकार्यासु चारामरचितासु च।
पूजाकर्मानुरोधेन कुर्यादन्यदिनेष्वापि।।

**वि.५४.३५५**

तीर्थदिनात् पूर्वदिने प्रातस्सन्ध्यार्चनान्ते पूर्ववद्धोमाद्यं सर्वं कृत्वा, देवं चित्रर(क)क्ष्यादिना सायुधमलङ्कृत्य, गजाश्वाद्यारूढजनैस्सार्धं मृगयोत्सवं कारयेत्। अथवा अवभृथदिनात् द्वितीये चतुर्थे वा शान्तमलङ्कृत्य मृगयोत्सवं कारयेत्। तद्रात्रौ [1]पूर्ववत्सर्वं कृत्वा, देवं ग्रामं प्रदक्षिणं कारयित्वा, अभ्यन्तरं प्रविश्य, संस्नाप्य, अभ्यर्च्य, हविर्निवेद्य, अभ्यन्तरे अन्तर्मण्डले शयनस्थाने वा पूर्ववत्प्रतिसरं बध्वा, तथैव शाययित्वा, प्रभाते देवेशमुत्थाप्य, पाद्याद्यैरभ्यर्च्य, तीर्थस्नानकालात्पूर्वं हविर्निवेदयेत्। अन्यत्सर्वं [2]पूर्ववत्कारयेत्।

**य.४२.१ - २१**

होमाद्यं सकलं कृत्वा चोत्सवं कारयेत्तथा।।

मृगयार्थं विशेषेण राजचिह्नैः समावृतम्।
आरोप्य याने देवेशं देवीभ्यां सह वा विना।।

आरामे वाऽथ नद्यादौ वनपार्श्वे मनोरमे।
अन्यस्मिन्नालये वाऽथ वास्तुबाह्ये नयेत्प्रभुम्।।

गच्छेत्तद्योजनादर्वाक् पुण्यस्थानं भवेद्यदि।

1. ग्रामप्रदक्षिणविधानेन।

2. उत्सवोक्तविधानानुसारम्।

मृगयार्थं विशेषेण यस्यां दिशि तथाऽत्र च।।

पूर्वमेव प्रपादीनि कारयेत्सुमनोरमम्।
तत्रैव शुद्धिं पूर्वोक्तां कारयित्वा पुनः प्रभुम्।।

नीत्वाऽत्र विष्टरे देवं स्थापयेत्समलङ्कृतम्।
देवीभ्यां पार्षदैश्चैव विष्वक्सेनेन चैव हि।।

पश्चाद्देवं प्रणम्यैव देवीभ्यां सह पूर्ववत्।
अत्रैव स्थापयेद्धीमान् शुद्धस्नानोक्तमार्गतः।।

समभ्यर्च्य च पूर्वोक्तमर्घ्यान्तं सम्प्रणम्य च।
महाहविः प्रभूतं वा यथाशक्ति यथारुचि।।

देवीभ्यां सह देवेशं निवेद्यैव च पूर्ववत्।
प्रीत्यर्थं देवदेवीनां(भ्यां) मुखवासं ददेत्पुनः।।

विष्वक्सेनं विशेषेण पार्षदैश्च सहात्र च।
निवेद्य विधिना पश्चान्मृगयार्थं च पूर्ववत्।।

अन्यासने समारोप्य देव्यौ नैव सहासनम्।
मृगयार्थमलङ्कृत्य सर्वतो नन्दनानि च।।

अपूपादीनि भक्ष्याणि नालिकेरोदकैः सह।
निवेद्य मुखवासं च प्रणाममपि कारयेत्।।

अश्वादिवाहनेष्विष्टे कृते यन्त्रेण चाव्ययम्।
समारोप्य पुनर्देवमायुधानि ददेत्पुनः।।

याने देव्यौ समारोप्य दिव्यचिह्नैः समावृते।
देवस्यानु नयेत्पश्चात्सार्धं तदमितेन च।।

केचिदश्वसमारूढाः केचिद्वारणवाहनाः।
केचिच्चापधराश्चैव केचित्खड्गधरास्तथा।।

केचिन्नृत्तसमायुक्ताः केचिद्गानसमायुताः।
केचिद्गदाधराः पुण्याः केचिद्दीपधराः क्रमात्।।

श्रुतिभिः स्मृतिभिश्चान्ये सर्वालङ्कारसंयुताः।
इत्येवं मृगयात्रां च कारयित्वाऽथ राजवत्।।

पश्चाद्देवं च देवीभ्यां सह ग्रामं प्रवेश्य च।
ग्रामप्रदक्षिणं कृत्वा प्रविशेदालयं पुनः।।

देवं संस्थाप्य चाऽस्थाने देवीभ्यां सह पूर्ववत्।
संस्नाप्याथ समभ्यर्च्य तथा रात्र्युत्सवं चरेत्।।

पुनः संस्नाप्य पूर्वोक्तं देवीभ्यां सह वा विना।
बद्ध्वा प्रतिसरं पश्चाच्छयने शाययेत्तथा।।

प्रभाते देवमुत्थाप्य हविर्नैव च पूजयेत्।

★★★

# १४.जलक्रीडोत्सवः

## ७.१४.१ जलक्रीडोत्सवः

### प्र.२५.२०५ - २२३

मध्याह्ने[1] देवदेवस्य जलक्रीडोत्सवं चरेत्।
प्रपां कृत्वा विधानेन नद्यादीनां तटे बुधः।।

वितानाद्यैरलङ्कृत्य जलक्रीडार्थमण्डपम्।
बिम्बाध्यर्धायतामर्धविस्तारां बिम्बदघ्निकाम्।।

जलद्रोणीमथाच्छिद्रां न्यस्य लोहमयीं घनाम्।
नादेयाद्भिः समापूर्य धारास्विति च मन्त्रतः।।

एलाचन्दनकर्पूरैः कुङ्कुमेनाधिवासयेत्।
कल्हारकेतकीपुष्पैरुशीरागुरुभिस्तथा।।

आस्तीर्य नववस्त्राणि 'वेदाह'मिति मन्त्रतः।
'पुण्यतीर्थं शिवं पुण्यं देवावास'मिति ब्रुवन्।।

अधिदेवं समावाह्य विग्रहैरष्टभिर्यजेत्।
मण्डपे पश्चिमार्धे तु विष्टरे सोत्तरच्छदे।।

देवदेवं समास्थाप्य शकुनसूक्तं समुच्चरन्।

---

1. अष्टमदिवसे मध्याह्ने।

नववस्त्रोत्तरीयाद्यैरलङ्कृत्य मनोहरम्।।

पाद्यादिभिस्समभ्यर्च्य स्थापकैः सहितो गुरुः।
'भूः प्रपद्ये'ति मन्त्रेण देवदेवं प्रणम्य च।।

'परं रहे'ति मन्त्रेण देवमादाय चादरात्।
'प्रतद्विष्णुस्तवत' इति जलद्रोण्यां निवेश्य च।।

इन्द्रादींश्च जयादींश्च तण्डुलैः क्लृप्तमण्डले।
समावाह्य समभ्यर्चेज्जलद्रोण्यभितो गुरुः।।

'आपोहिष्ठादि'मन्त्रांस्त्रीननुवाकान् समुच्चरन्।
'इदमापश्शिवे'त्युक्त्वा 'आपो वा इद' मुच्चरन्।।

अभिमन्त्र्य जलद्रोण्यां देवदेवं प्रणम्य च।
पौरुषं सूक्तमुच्चार्य विष्णुसूक्तं च वैष्णवम्।।

'इषे त्वोर्जेत्वा'दिजपन् 'भूरानिलय' इत्यपि।
मज्जयित्वा जलद्रोण्यां देवं प्राक्शिरसं हरिम्।।

अधिवास्य तु यामार्धं यामद्वयमथापि वा।
'परं रंहे'ति मन्त्रेण तत उद्धृत्य वै पुनः।।

अलङ्कृत्य च वस्त्राद्यैर्यथार्हं परिपूज्य च।
यानमारोप्य देवेशं ग्राममालयमेव वा।।

प्रदक्षिणं क्रमान्नीत्वा सर्वालङ्कारसंयुतम्।
ग्रामवीथ्यामुपहृतमुपहारमगृह्य च।।

पुनरालयमाविश्य संस्थाप्यास्थानमण्डपे।
सुगन्धितैलेनाभ्यज्य देवं संस्नाप्य पूर्ववत्।।

जीवस्थाने समास्थाप्य समभ्यर्च्य निवेदयेत्।
[1]तद्रात्रावुत्सवान्ते तु देवं देवीयुतं हरिम्।।

प्रतिष्ठोक्तविधानेन बद्ध्वा प्रतिसरं ततः।
अधिवासविधानेन शयने शाययेद्गुरुः।।

★★★

1. तद्रात्रौ - उत्सवे अष्टमदिन रात्रौ

# १५. तीर्थोत्सवः

## ७.१५.१ तीर्थोत्सवकालनिर्णयः

**स.५५.१५**

उत्सवान्तस्तु दिवसस्तत्तु तीर्थदिनं विदुः।

**प्र.२४.१५ - २४**

विषुवायनभूपर्क्षप्रतिष्ठाकर्तृभेषु च।।

ग्रहणे मासनक्षत्रे विष्णुपञ्चदिनेषु च।
उत्सवस्यान्तदिवसे तेषु तीर्थं प्रकल्पयेत्।।

एतेष्वेकं परिग्राह्यं यजमानस्य चेच्छया।
विषुवे चायने चैव ग्रहणे सोमसूर्ययोः।।

तत्तत्काले प्रकुर्वीत तीर्थस्नानं तु नान्यथा।
अन्यर्क्षेष्वथ पूर्वाह्ने मध्याह्ने वा गुणान्विते।।

एकस्मिन्नेव मासे तु यदि तीर्थदिनद्वयम्।
तयोरन्त्यदिने तीर्थम् इति पूर्वजदर्शनम्।।

तदेव यदि सूर्यस्य विद्धं चेत्सङ्क्रमादिभिः।
वर्जनीयं तथा पूर्वं प्रशस्तमभिधीयते।।

वारद्वयानुषक्ते चेत्तिथौ स्यात्तु परे तथा।

अधिमासः परित्याज्यः कालोत्सवविधौ हरेः।।

अर्कवारर्क्षसंयोगः सर्वदा सम्प्रशस्यते।
श्रवणद्वादशीयोगः सर्वकर्मफलप्रदः।।

योगाश्च सुप्रशस्ताः स्युः सिद्धामृतवराह्वयाः।
तिथिद्वयानुषक्तं चेन्नक्षत्रं स्यात्परेऽहनि।।

परस्मिन् दिवसे स्याच्चेद्यावच्च दशनाडिकाः।
हीनं चेत्पूर्वदिवसे सङ्कल्प्यावभृथं चरेत्।।

**क्रि.१४.१ - ९ ; अ.२९**

**य.३८.११ - १८**

अयनादौ तु सङ्क्रान्त्यां ग्रहणे च विशेषतः।
तत्तत्काले च तीर्थं स्याद्रात्रावपि च कारयेत्।।

राहुदर्शनसङ्क्रान्त्योः स्नानं श्रेष्ठं निशास्वपि।
तथाऽऽहुः स्मृतिकाराश्च निशायामनिषिद्धताम्।।

क्रियां समाप्य मध्याह्ने रात्रौ चेत्सकलं बुधः।
तावत्कालं विनोदेन नीत्वा तत्तीर्थमाचरेत्।।

विष्णुपञ्चदिनेष्वेवं मासर्क्षे स्थापनादिने।
यजमानस्य जन्मर्क्षे राज्ञो जन्मर्क्ष एव वा।।

एतेष्ववभृथं कल्प्य चोत्सवं सम्यगाचरेत्।
तेषु कालश्च मध्याह्नः पूर्वाह्णे वा शुभोदये।।

ऋक्षे तु द्विदिने सङ्गे यदहन्यधिकं परम्।
तथा मासर्क्षकाश्चान्ये एकमासे परस्परम्।।

दिनद्वये तु सम्प्राप्ते नेष्टं तत्प्रथमं विदुः।
तीर्थस्यात्र परं श्रेष्ठमन्यनैमित्तिकेषु च।।

पूर्णपर्वेन्दुसंयोगं यद्दिने चोभयोरपि।
तीर्थस्यात्र विशेषेण तत्परं वाऽन्यकर्मणाम्।।

**प्र.२४.२८, २९**

**खि.३३.१ - १३**

अत ऊर्ध्वं प्रवक्ष्यामि तीर्थकालविनिर्णयम्।
रथरङ्गोत्सवस्यापि तथा कालविनिर्णयम्।।

एकमासे तीर्थऋक्षं द्विवारं सम्भवेद्यदि।
परस्मिन्नेव नक्षत्रे कुर्यात्कालोत्सवं हरेः।।

तस्मिन् सङ्क्रमदुष्टे तु पूर्वस्मिन्नेव कारयेत्।
उभयत्र तु सङ्क्रान्तौ उत्सवञ्चोत्तरे चरेत्।।

दोषयुक्तं दिनं त्यक्त्वा शुद्धे तीर्थन्तु कारयेत्।
वारद्वये खण्डिते भे यस्मिन् वारे इनोदयः।।

तस्मिंस्तीर्थोत्सवं कुर्यादिति पूर्वजशासनम्।
द्विनद्वये तिथावृक्षे त्रिदिने वाऽर्यमोदये।।

कलामात्रं स्थिते वापि तस्मिन्नुत्सवमाचरेत्।

पूर्वस्मिन् दिवसे ऋक्षं विना सूर्योदयो यदि।।

परस्मिन्नुदये दृष्ट्वा ऋक्षमुत्सवमाचरेत्।
दिनद्वयोदये व्याप्तौ परस्मिन्नेव चोत्सवः।।

वारद्वये समव्याप्तौ यस्मिन्नाधिकनाडिकाः।
मध्याह्नसङ्गतास्तस्मिन् दिने तीर्थं समाचरेत्।।

उदयव्यापिनक्षत्रे रथोत्सवमथाचरेत्।
अन्यथा चेन्महान् दोषो भविष्यति न संशयः।।

तस्मासर्वप्रयत्नेन रथारोहादनन्तरे।
दिवसे एव कर्तव्यः क्रमात्तीर्थमहोत्सवः।।

तस्मिन् दिने तीर्थदानं पुण्यमाहुर्महर्षयः।
देवप्रीतिकरं भद्रं महीशविजयप्रदम्।।

तस्मात्परस्मिन् दिवसे तीर्थं केचिद्वदन्ति हि।
रथोत्सवं विना सर्वमुत्सवं त्रिमुहूर्तके।।

स्नपनञ्च प्रकुर्वीत तद्धीने तन्न कारयेत्।

**ज्ञा.९३.१८१**
अवभृथं दिवैव कुर्यात्। रात्रावुदकस्याशुचिभावात् महान् दोषो भवेत्।

## ७.१५.२ तीर्थदिनात्पूर्वरात्रौ कर्तव्यानि कर्माणि

**वि.५४. ३५५**
तद्रात्रौ पूर्ववत्सर्वं कृत्वा, देवं ग्रामं प्रदक्षिणं कारयित्वा, अभ्यन्तरं प्रवेश्य, संस्नाप्य, अभ्यर्च्य, हविर्निवेद्य, अभ्यन्तरे अन्तर्मण्डले शयनस्थाने वा पूर्ववत्प्रतिसरं बध्वा, तथैव शाययित्वा -----------।

**ज्ञा. १३.१८०**

तीर्थदिनात्पूर्वरात्रावुत्सवान्ते देवेशमभ्यर्च्य हविर्निवेद्य चक्रञ्च ग्राममालयं वा प्रदक्षिणं कारयित्वा चक्रं तीर्थजले संस्नाप्य आलयं प्रविश्य दक्षिणपार्श्वे भगवतः संस्थाप्य पुण्याहं वाचयित्वा प्रतिसरं बध्वा पूर्ववच्छयने देवेशं शाययित्वा नृत्तगेयाभ्यां रात्रिशेषं नयेत्।

**खि.३२. १४९, १५१**

तीर्थस्नानदिनात्पूर्वं रात्रौ तत्र विचक्षणः।
सायं कालोत्सवं कृत्वा रात्रिपूजां समाप्य च।।

चक्रं प्रतिसरञ्चापि कृत्वा ग्रामप्रदक्षिणम्।
चक्रं संस्नाप्य तीर्थे तु ततो देवालयं विशेत्।।

यमपावकयोर्मध्ये पूर्वोक्तेन क्रमेण वै।
बद्ध्वा प्रतिसरं पश्चात् शयने शाययेद्धरिम्।।

**प्र.२५. २१९ - २२३**

यानमारोप्य देवेशं ग्राममालयमेव च।।

प्रदक्षिणं क्रमान्नीत्वा सर्वालङ्कारसंयुतम्।
ग्रामवीथ्यामुपहृतमुपहारमगृह्य च।।

पुनरालयमाविश्य संस्थाप्याऽस्थानमण्डपे।
सुगन्धितैलेनाभ्यज्य देवं संस्नाप्य पूर्ववत्।।

जीवस्थाने समास्थाप्य समभ्यर्च्य निवेदयेत्।
तद्रावुत्रात्सवान्ते तु देवं देवीयुतं हरिम्।।

प्रतिष्ठोक्तविधानेन बध्वा प्रतिसरं ततः।
अधिवासविधानेन शयने शाययेद् गुरुः।।

अ.२९

तीर्थस्योक्तदिनात्पूर्वरात्रौ कौतुकबन्धनम्।।

पूर्वोक्तविधिना कृत्वा शयनं सम्प्रकल्पयेत्।
देवदेवं सुसम्पूज्य नववस्त्रं सुयोजयेत्।।

उत्तरीयं च कृत्वा तु भूषणानामलङ्कृतम्।
गन्धैर्माल्यैरलङ्कृत्य धूपदीपसमायुतैः।।

देवीभ्यां च तथा कुर्यात् चक्रादीनां तथा चरेत्।
मूलबेरे तथा कुर्यात् पूजयित्वा विधानतः।।

देवेशं शयने चैव शिरसा धारयेत्क्रमात्।
यजमानगृहे वापि शैषिकालय एव वा।।

[1]तत्सूत्रं सङ्ग्रहेद्विद्वान् शिरसा, भूषितो द्विजः।
नृत्तं गेयं च वाद्यं च घोषयित्वा शनैश्शनैः।।

शय्यास्थानं प्रविश्यैव पुण्याहं वाचयेत्क्रमात्।
देवेशं कौतुकं बद्ध्वा चक्रादीनां तथा चरेत्।।

कौतुकबन्धनात्पूर्वम् आचार्यमपि पूजयेत्।
वस्त्रं चैवोत्तरीयं च हेमपुष्पाङ्गुलीयकैः।।

1. प्रतिसरसूत्रम्।

दैवज्ञं च तथा पूज्य कारयेत्सूत्रबन्धनम्।
देवेशं शाययित्वात्र पूर्वोक्तविधिना तथा।।

परितः प्रावरणं कृत्वा बाह्ये चक्रादयस्तथा।
पश्चिमे गरुडं चापि शान्तं चैव तथोत्तरे।।

दक्षिणे चक्रमुद्दिश्य शयनानि प्रकल्प्य च।
प्राक्छिरश्शाययेद्वीशं शाययेच्छयनेन वा।।

प्रत्यङ्मुखेऽथवा वीशं पश्चिमे शीर्षकं न्यसेत्।
तथैव दक्षिणे शीर्षं विष्वक्सेनं च शाययेत्।।

चक्रं तत्प्राक्छिरं वाथ उदक्छिरमथापि वा।
शाययित्वा यथान्यायं जयादीन् परितोऽर्चयेत्।।

नृत्तगेयैश्च वाद्यैश्च रात्रिशेषं नयेत्क्रमात्।

**स.५६. १ - ६**

तीर्थस्नानदिनात्पूर्वं रात्रौ कर्मेदमुच्यते।
तद्रात्रौ पूर्ववत्कुर्याद्बलिहोमं तथोत्सवम्।।

पुनर्देवं च संस्नाप्य तथाऽभ्यर्च्य हवींषि च।
निवेदयित्वा देवेशं पुण्याहं वाचयेत्तथा।।

प्रतिष्ठोक्तविधानेन क्रमेणैव तु पञ्च च।
शयनानि तथाऽऽस्तीर्य पञ्च वस्त्राणि वा पुनः।।

बध्वा प्रतिसरां तत्र पूर्ववच्छाययेद्धरिम्।
तत्तन्मन्त्रेण चक्रादीन् बध्वा प्रतिसरां तथा।।

नृत्तैर्गेयैश्च वाद्यैश्च रात्रिशेषं नयेत्पुनः।
गुरुणा सहितश्शुद्धो यजमानो हविष्यभुक्।।

संचिन्त्य शयितं देवं तद्रात्रौ संविशेद्बुधः।

**क्रि.१४.१७७ - १७८**

अथ तीर्थदिनात्पूर्वं रात्रौ देवं विशेषतः।
समभ्यर्च्य निवेद्यैव बद्ध्वा प्रतिसरामपि।।

प्रतिष्ठोक्तक्रमेणैव सार्धं चक्रेण शाययेत्।

## ७.१५.३ प्रतिसरबन्धे हविर्निषेधः

**ज्ञा. ९३.१८०**

यस्य देवस्य यदर्थं प्रतिसरबन्धनं कृतं तत्समाप्यन्तं तावत्तस्य हविर्निवेदनं प्रतिषिद्धम्। तदालयगतदेवानां सर्वेषामित्येके।

## ७.१५.४ तीर्थोत्सवे रथयात्रा

**क्रि.१४.१०८ - १११**

एकविंशदिने चैव चतुर्दशदिने तथा।
नवसप्ताहपक्षे वा रथयात्रां समाचरेत्।।

रथयात्रावासाने तु देवेशं सम्प्रणम्य च।
अष्टोपचारैरभ्यर्च्य मुद्गान्नं च निवेदयेत्।।

मुखवासं निवेद्यैव पुष्पाञ्जलिमथाचरेत्।
तत्क्षणादेव देवेशं तद्रथादवरोपयेत्।।

याने चैव समारोप्य तीर्थस्थानं प्रवेश्य च।
तीर्थस्याभिमुखे कृत्वा तीर्थोत्सवमथाचरेत्।।

### ७.१५.५ एकविंशतिदिने प्रातः रथोत्सवाचरणे अशक्तौ विकल्पः

**क्रि. १४. १०७**

एकविंशेऽप्यशक्तौ तु चतुर्दशदिनं चरेत्।
चतुर्दशेऽप्यशक्तौ तु नवाहं चोत्सवं चरेत्।।

### ७.१५.६ चूर्णोत्सवप्रयोगः

**वि.५४.३५५, ३५७**

प्रभाते देवेशमुत्थाप्य, पाद्याद्यैरभ्यर्च्य, तीर्थस्नानकालात्पूर्वं हविर्निवेदयेत्। अन्यत्सर्वं पूर्ववत्कारयेत्। ------------------ तीर्थदिने प्रातरुत्सवे कृते तत्राऽस्थानमण्डपे विष्टरे देवं संस्थाप्य, अष्टोपचारैरभ्यर्च्य, अभिमुखे गरुडं, दक्षिणे चक्रम्, उत्तरे विष्वक्सेनं च धान्यपीठे संस्थाप्य, अभ्यर्च्य, देवाभिमुखे गोमयेनोपलिप्य, धान्यान्यास्तीर्य, (ऊर्ध्वे) उलूखलमुसलौ सन्यस्य, वस्त्रेणाऽवेष्ट्य, तयोः ब्रह्मेशावभ्यर्च्य, हरिद्रायां लक्ष्मीमभ्यर्च्य, पुष्पादीन् संशोध्य, हरिद्रामुलूखले प्रक्षिप्य, 'अतो देवा'दीन् जप्त्वा, आचार्यः किञ्चिदवघातं कृत्वा, ततो देवदासीभिर्भक्तैर्वाऽवघातं कारयित्वा, चूर्णीकृत्य, कलशान् चतुरो द्वावेकं वा पूरयित्वा, वस्त्रेणाऽऽच्छाद्य, अधिदेवतां सिनीवालीमभ्यर्च्य, देवमाराध्य, सुगन्धितैले अधिदैवतं विष्णुमभ्यर्च्य, वैष्णवं मन्त्रमुच्चार्य, तेनाभ्यञ्जनं कृत्वा, 'वेदाह'मिति चूर्णेनाभिषिच्य, तच्छिष्टेन चक्रादींश्चाभिषिच्य, तच्चूर्णं चक्रञ्च समादाय, ग्रामं प्रदक्षिणीकृत्य, चक्रसन्निधौ भक्तानां ब्राह्मणानां शिरस्सु तच्चूर्णं विकिरेत्। तच्चूर्णं किञ्चिदपि शिरसा

धारयेत्तस्याशुभानि विनश्यन्ति। बल्युत्सवाद्यनुगता ये सर्वे ते विप्रसमाः, तस्मादस्पर्शस्पर्शनं न दोषाय भवेत्।

**स.५६.६ - १९ ; ज्ञा.९३.१८०**

**खि.३२. १५२ - १६०**

पुनः प्रभाते धर्मात्मा स्नात्वा स्नानविधानतः।
शयनाद्देवमुत्थाप्य चार्घ्यान्तमभिपूज्य च।।

पूर्वोक्तेनैव विधिना प्रातरुत्सवमाचरेत्।
रथं त्रिः सम्परिक्रम्य सर्वालङ्कारशोभितम्।।

तस्मिन् देवेशमारोप्य श्रीभूमिसहितं प्रभुम्।
सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम्।।

ग्रामप्रदक्षिणं नीत्वा समभ्यर्च्यावरोपयेत्।
डोलायमाने गोविन्दं मञ्चस्थं मधुसूदनम्।।

रथस्थं केशवं दृष्ट्वा न पुनर्जायते नरः।
आस्थाने स्थापयेद्देवं नृत्तगेयसमन्वितम्।।

हरिद्रां चूर्णयित्वा तु शुद्धैर्भक्तान्वयोद्भवैः।
पूरयित्वा तेन कुम्भान् धान्यवेद्यां त्वभिक्षिपेत्।।

पुण्याहसलिलेनोक्ष्य अधिदेवान् समर्चयेत्।
स्नपनान्ते देवदेवं चूर्णैः संस्नापयेत्क्रमात्।।

चक्रञ्च स्नापयेच्चूर्णैः पश्चाद्ग्रामप्रदक्षिणम्।
नाथवन्नाययेद्देवं सर्ववाद्यसमन्वितम्।।

चूर्णशेषञ्च भक्तेभ्यो दापयेद्विकिरेत्ततः।

**प्र.२५.२२४ - २३७**

प्रभाते देवमुत्थाप्य पाद्याद्यर्घ्यान्तमर्चयेत्।
तस्मिन् तीर्थदिने प्रातः होमाद्यं प्रातरुत्सवम्।।

कृत्वा हविर्विना देवम् अभ्यर्च्यास्थानमण्डपे।
प्रमुखे गरुडं पश्चात् दक्षिणे चक्रमेव च।।

अमितं चोत्तरे धीमान् धान्यपीठोपरि न्यसेत्।
नित्यपूजां हविर्दानं ध्रुवबेरे समाचरेत्।।

पूर्वालङ्कृतवस्त्रादीन् विसृज्यैव प्रयत्नतः।
अन्यवस्त्राणि चाच्छाद्य यथार्हं भूष्य भूषणैः।।

अष्टोपचारैरभ्यर्च्य देवं चक्रादिदेवताः।
व्रीहिभिः स्थण्डिलं कृत्वा द्विहस्तायतविस्तृतम्।।

उलूखलं च मुसलं स्थाप्य वस्त्रेण संयुतम्।
तयोरीशौ क्रमेणैव ब्रह्मेशावर्चयेद्बुधः।।

पात्रे हरिद्रां सङ्गृह्य सिनीवालीमथार्च्य च।
उलूखले हरिद्रां च तन्मन्त्रेण विनिक्षिपेत्।।

गृहीत्वा वैष्णवैर्मन्त्रैराचार्यो मुसलं तथा।
विष्णुसूक्तं समुच्चार्य किञ्चित्तदवघातयेत्।।

भक्तैर्वा देवदासीभिः चूर्णीकृत्य विशेषतः।
एकस्मिन् वा द्वयोर्वाथ त्रिषु वा कलशेषु वै।।

गन्धोषितं च वा तैलम् आढकं परिगृह्य च।

पिधाय च पिधानैश्च स्थण्डिलोपरि विन्यसेत्।।

आच्छाद्य नववस्त्रेण सोमं तैले समर्चयेत्।
सिनीवालीं च तच्चूर्णे चक्रादींश्च प्रपूजयेत्।।

देवमभ्यर्च्य पुण्याहं वाचयन् वैष्णवं गुरुः।
संस्राव्य मूर्ध्नि तत्तैलं 'वेदाह'मिति मन्त्रतः।।

हारिद्रचूर्णैः संस्नाप्य चक्रादीन् स्नापयेत्ततः।
तच्छिष्टं धारयन् भक्तः सर्वपापैः प्रमुच्यते।।

अथ याने समारोप्य देवं चक्रादिभिस्सह।
चूर्णोत्सवमिमं कृत्वा तीर्थोत्सवमथाचरेत्।।

**य.४२.२५ - ३७**

तस्मिंस्तीर्थदिने पश्चात्पूर्वोक्तं प्रातरुत्सवम्।
हविर्विनैव देवेशं स्थापयेन्मण्डपे तथा।।

प्रमुखे गरुडं पश्चाद्दक्षिणे चक्रमेव च।
अमितं चोत्तरे धीमान् धान्यपीठोपरि न्यसेत्।।

समभ्युक्ष्य समभ्यर्च्य पाद्याद्यैरष्टविग्रहैः।
व्रीहिभिः स्थण्डिलं कृत्वा द्विहस्तायतविस्तृतम्।।

चतुरश्रं समं कृत्वा प्रमुखेऽत्रोपरि क्रमात्।
मुसलोलूखले न्यस्य वस्त्रेणैव च वेष्टयेत्।।

तयोरीशौ क्रमेणैव ब्रह्मेशावर्चयेद्बुधः।
सिनीवालीं हरिद्रायां समभ्यर्च्य विशोध्य च।।

आचार्यः प्राङ्मुखो भूत्वाऽवघातं किञ्चिदाचरेत्।
गणिकाभिश्च भक्तैश्च कारयित्वाऽवघातकम्।।

चूर्णीकृत्य क्रमाच्चूर्णमाहरेत्कलशोदके।
एकं वाऽथ द्वयं वाऽथ पूरयेत्कलशं सुधीः।।

गन्धोषितं च तत्तैलमाढकं सम्प्रगृह्य च।
सापिधानं तथा ताभ्यां स्थण्डिलोपरि सन्न्यसेत्।।

आच्छाद्य नववस्त्रेण सोमं तैले समर्चयेत्।
सिनीवालीं तथा चूर्णे चक्रादीन् पूजयेत्ततः।।

ततो देवं समभ्यर्च्य पुण्याहमपि वाचयेत्।
तैलमादाय हस्ताभ्यां वैष्णवं मन्त्रमुच्चरन्।।

संस्राव्य मौलौ तत्तैलं 'वेदाह'मिति मन्त्रतः।
अभिषिच्य च चूर्णेन देवं चक्रादिकानपि।।

अभिषिक्तं तु तच्चूर्णं शिरसा धारयन्नरः।
देवदेवमनुस्मृत्य सर्वपापैः प्रमुच्यते।।

अथ याने समारोप्य देवेशं समलङ्कृतम्।
चक्राद्यैः सह तद्ग्रामं कृत्वा चूर्णोत्सवं तथा।।

**अ.२९**

प्रभाते तु स धर्मात्मा यजमानयुतो गुरुः।।

स्नात्वा स्नानविधानेन देवालयमुपाव्रजेत्।
शयनादुद्धृतं देवं गर्भागारे सुसन्न्यसेत्।।

नित्यपूजां च कृत्वान्ते हविर्नैव विचक्षणः।
शान्तवीशौ च चक्रं च प्रातरुत्सवमाचरेत्।।

पश्चादालयमाविश्य आलयं च प्रदक्षिणम्।
आस्थानमण्डपे पश्चात् आसने च सुसन्न्यसेत्।।

देवस्य दक्षिणे चक्रम् उत्तरे चैव शैषिकम्।
तत्प्राच्यां गरुडं चैव स्थापयेत्तण्डुलोपरि।।

देवस्याभिमुखे न्यस्य मण्डलान्युपलिप्य च।
पञ्चवर्णैरलङ्कृत्य धान्यवेदिं प्रकल्प्य च।।

उलूखलं च मुसलं मण्डले च सुविन्यसेत्।
वस्त्रेण वेष्टयित्वा तूलूखलं मुसलं तथा।।

उलूखले सोममभ्यर्च्य मुसले चक्रमर्चयेत्।
हरिद्रायां सिनीवालीम् अर्चयित्वा यथाक्रमम्।।

देवाङ्गनां सुसम्पूज्य सर्वालङ्कारसंयुताम्।
चक्रादीनां समभ्यर्च्य जयादीनामनुस्मरन्।।

घातयित्वा तथाऽऽचार्यः 'सोमं राजे'ति चोच्चरन्।
चूर्णवत्स्वस्य वा कृत्वा घातयेदप्सरा भवेत्।।

शूर्पेण शोधयित्वा तु सुवर्णं तत्र विन्यसेत्।
कलशेन तु सङ्गृह्य तन्तुना वेष्टयेत्क्रमात्।।

कलशं चूर्णपूर्णन्तु वस्त्रेणोपरि वेष्टयेत्।
सर्वालङ्कारसंयुक्तमालयं च प्रदक्षिणम्।।

देवस्याभिमुखे न्यस्य देवेशं च समर्चयेत्।
चूर्णेनैवाभिषिच्येत चक्रादीनां तथा भवेत्।।

**क्रि.१४.१७८ - १८२**

हवींषि च विना प्रातरर्चयित्वाऽष्टविग्रहैः।।

होमं हुत्वा बलिं दत्वा प्रातरुत्सवमाचरेत्।
आस्थानमण्डपे देवं संस्थाप्य प्राङ्मुखं क्रमात्।।

देवाग्रे स्थापयेच्चक्रं धान्यपीठे बहिर्मुखम्।
तस्यैवोत्तरतः पार्श्वे विष्वक्सेनं समाहितः।।

चक्राग्रे धान्यपीठे तु हरिद्रां चापि विन्यसेत्।
संस्कृत्यैव तथा चूर्णं अभिषिच्य च पूर्ववत्।।

चक्रशान्तौ च संस्नाप्य अभिषिच्य च पूर्ववत्।

**नि.२९**

[1]प्रातः कालोत्सवं कृत्वा प्रविश्यास्थानमण्डपे।।

विष्टरे तत्र संस्थाप्य विमानस्याङ्गने पुनः।
गोमयेनोपलिप्यैवोलूखलं मुसलं न्यसेत्।।

तयोर्ब्रह्मेश्वरावभ्यर्च्य हरिद्रां गृह्य तत्र वै।
श्रीदेवीं च समभ्यर्च्य 'श्रिये जात'इति ब्रुवन्।।

---

1. तीर्थदिने प्रातः कालोत्सवं कृत्वेत्यर्थः।

हरिद्रामुलूखले क्षिप्त्वा विष्णुसूक्तं समुच्चरन्।
आचार्यो घोषयित्वा तु चूर्णयेद्देवयोषितः ।।

सर्वपापविनिर्मुक्तो सामीप्यं पदमाप्नुयात्।

तच्चूर्णेनैव चतुरो द्वावेकं वा प्रपूर्य च।
तदर्धं तिलतैलेन कलशमेवं प्रपूर्य च।।

व्रीहिभिः स्थण्डिलं कृत्वा देवस्याग्रे निधाय वै।
दक्षिणोत्तरयोस्तैलं चूर्णं च स्थापयेत्क्रमात्।।

सोमं चैव सिनीवालीं तयोरेव समर्चयेत्।
अष्टोपचारैर्देवेशं देव्यौ चाभ्यर्च्य चादरात्।।

------------------------------------------।

'अतो देवा'दिना तैलं 'सिनीवाली'ति चोच्चरन्।।

तैलेनैव तु चूर्णेन देवेशं स्नापयेत्पुनः।
चक्रमभ्यर्च्य शिष्टेन तेन चैवाभिषेचयेत्।।

स्नापयेच्चूर्णतैलाभ्यां देव्यावपि पृथक्पृथक्।
यो नरश्शिरसा धत्ते तैलचूर्णे हरिं स्मरन्।।

**वा.३२**

नवाहं समनुप्राप्य रक्षां कृत्वाधिवासयेत्।।

नित्यकर्मावसाने तु देवमुत्थाप्य मन्त्रवित्।
अलङ्कृत्य च तं देवं यथालक्षणमादरात्।।

यानमारोप्य तं देवमग्रे चक्रादिना सह।

भ्रामयेत बलिं क्षिप्त्वा ग्रामादीनां प्रदक्षिणम्।।

मन्दिरे देवमानीय यथापूर्वं तथा चरेत्।
चक्रं च बलिबेरं च उत्सवं च त्रयं तथा।।

हविर्विना समभ्यर्च्य अन्यविग्रहमाचरेत्।
हविरादि च कर्माणि ध्रुवे सर्वं समाचरेत्।।

अलङ्कृतं तु वस्त्रादि विसृज्यैव प्रयत्नतः।
अन्यद्वस्त्रं समाच्छाद्य लब्धभूषणभूषितम्।।

आस्थाने स्थाप्य तद्देवं पाद्यमाचमनं ददेत्।
दक्षिणे चक्रमादाय धान्यवेद्युपरि न्यसेत्।।

बलिबेरं च तत्रैव धान्यवेद्युपरि न्यसेत्।

----------------------------------------।।

द्विचतुः पञ्चकलशैः स्नापयित्वा विचक्षणः।
अथवा कलशैकेन स्नापयेद्देशिकोत्तमः।।

देवस्य प्रमुखे चैव मण्डलं चोपलेपयेत्।
व्रीहिभिः कल्पयेद्वेदिं हस्तमात्रप्रमाणतः।।

उलूखलमुसलौ संस्थाप्य अर्चयित्वा यथाक्रमम्।
सोमं सुदर्शनं तत्र पूजयित्वा समाहितः।।

हरिद्रामानीय तत्काले सिनीवालीं समुच्चरन्।
हरिद्रामुलूखले क्षिप्त्वा मुसलेनावघातयेत्।।

विष्णुसूक्तेन संघातमाचार्यः किञ्चिदाचरेत्।
पश्चात्तु देवदासीभिरन्यैर्भक्तैरथापि वा।।

तत्र चाप्सरसः स्मृत्वा प्रोक्षयित्वा विचक्षणः।
'शन्नो देवीरभीं'त्युक्त्वा तत्र कार्यं समाचरेत्।।

पश्चान्मुसलमादाय दृढं तत्रावघातयेत्।
चूर्णयित्वा यथान्यायं तच्चूर्णं कलशे न्यसेत्।।

तैलेनापूर्य कलशं स्थापयेद्देवसन्निधौ।
स्नपनोक्तक्रमेणैव चार्चयित्वा समाहितः।।

तैलेनाभ्यञ्जयेद्देवं चूर्णयुक्तं प्रलेपयेत्।।

चक्रं च बलिबेरादीन् लेपयेच्च विचक्षणः।

### ७.१५.७ तीर्थोत्सवप्रयोगः

**वि.५४.३५७ - ३५९**

मध्याह्ने अवभृथं प्रधानम्, (अपराह्ने वा) पूर्वाह्ने देवेशं यानमारोप्य, चक्रवीशशान्तान् पुरस्कृत्य, तीर्थस्नानाय गच्छेत्। आलयाभिमुखे विहितम् ऐशान्याम् उत्तरे वा तदभावे यथेष्टतटाके नद्यां नदीसङ्गमे समुद्रे वा [1]तस्माद्धनुस्सहस्राभ्यामूर्ध्वं न गच्छेत्। तत्तीरे प्रपां कृत्वा अलङ्कृत्य, यस्यां दिशि जलं तदभिमुखं देवं प्रतिष्ठाप्य, अभ्यर्च्य, तथैव चक्रादीन् संस्थाप्य, दशकलशानाहृत्य, तन्तुनाऽऽवेष्ट्य, संशोध्य, सिद्धार्थोदकाक्षतो-

1. पाठान्तरम् - वै.मु.स. - - 'तस्माद्धनुस्सहस्रमर्वागूर्ध्वं न गच्छेत्।' पृ.३४८

दककुशोदकजप्योदकरत्नोदकैः प्रधानान् पूरयित्वा, उपस्नानान् शुद्धोदकैः पूरयित्वा, देवाभिमुखे धान्यवेद्यां मध्ये सिद्धार्थोदकं, पूर्वे अक्षतोदकं, दक्षिणस्यां कुशोदकं, प्रतीच्यां जप्योदकम्, उदीच्यां रत्नोदकञ्च सन्यस्य, तत्तद्वामपार्श्वे तत्तदुपस्नानकलशान् सन्यस्य, वस्त्रेणाछाद्य, अधिदेवान् आदित्याप्सरःकाश्यपबृहस्पतिमुनितक्षकसर्वमन्त्रविद्याधरविष्णुगन्धर्वान् दशैतान् कलशेषु क्रमेण अभ्यर्च्य, पुण्याहं कृत्वा, देवं पाद्याद्यर्घ्यान्तमभ्यर्च्य, मध्यमादिपञ्चकलशोदकैः 'शन्नो देवीः' 'पूतस्तस्य', 'इमा ओषधय' 'अभित्वाशूर', 'चत्वारि वागि'ति 'वारीश्चतस्त्र'इति सर्वोपस्नानैश्चाभ्युक्ष्य, तच्छिष्टोदकैः चक्रं संस्नाप्य, तच्चक्रं विष्वक्सेनं गरुडञ्च तीर्थजले निमज्जयेत्। केवलं चक्रं वा निमज्जयेत्। पश्चात्सर्वे जनास्तत्तीर्थे जले देवसन्निधौ स्नानं कुर्युः। ते सर्वे पापविमुक्ताः विष्णुलोकं गच्छन्ति।

देवं शुद्धोदकैः संस्नाप्य, प्लोतेन विमृज्य, नववस्त्रोत्तरीयाभरणैरलङ्कृत्य, अष्टोपचारैरभ्यर्च्य, वस्त्राद्यैश्चक्रादीनलङ्कृत्य, अभ्यर्च्य, यानमारोप्य, वीथ्यां लाजाक्षतकुसुमान्यवकीर्य, चक्रवीशशान्तादीन् पुरस्कृत्य, आचार्यः शकुनसूक्तं पठन् तोयधारापुरस्सरम् अग्रतो गच्छेत्। सर्वालङ्कारसंयुक्तं सर्ववाद्यसमायुक्तं स्तोत्रध्वनिसमायुक्तम् आलयं प्रविशेत्। द्वारदेशे देवेशं दीपाङ्कुरोदकुम्भैः अर्चकाः प्रत्युत्थानं कुर्युः। पश्चादास्थानमण्टपे देवं संस्थाप्य, चतुर्दिक्षु चतुर्वेदाध्ययनं कारयित्वा, स्तोत्रैर्जयशब्दैश्च संस्तूय, अभ्यन्तरे स्वे स्वे स्थाने संस्थाप्य, देवेशं चक्रादींश्च सप्तविंशतिभेदैरभ्यर्च्य, विष्णुसूक्तेन पञ्चप्रणामान् कृत्वा, अष्टाक्षरेण पुष्पाञ्जलिं दत्वा, यज्ञालयं गत्वा, अग्निं प्रज्वाल्य, परिस्तीर्य, पूर्णाहुतिं हुत्वा, अग्निं विसृज्य, कुम्भवेदिम् आसाद्य,

कुम्भस्थान् देवान् मध्यादिक्रमेण प्रणवेन ध्रुवबेरे समारोपयेत्। बालालयं चेत् कौतुके समारोपयेत्।

**क्रि. १४. ११४ - ११७**

**प्र.२५.२३७ - २६१**

------------------ [1]तीर्थोत्सवमथाचरेत्।।

देवखातं यदि भवेत् तीर्थं तत्र प्रशस्यते।
नद्यादितीरे संस्थाप्य देवीभ्यां सह वा विना।।

चक्रादीन् [2]पूर्ववत् स्थाप्य प्रमुखे स्थण्डिलं चरेत्।
द्रव्येणापूर्य कलशान् गायत्रीमन्त्रमुच्चरन्।।

मध्ये सिद्धार्थकं न्यस्य प्राच्यां स्यादक्षतोदकम्।
दक्षिणे गन्धतोयं स्यात् पश्चिमे तु कुशोदकम्।।

जप्योदकं चोत्तरे स्यात् विदिशासु च मध्यतः।
उपस्नानानि विन्यस्य क्रमात्तदधिपान् गुरुः।।

आदित्यानप्सरसश्च काश्यपं च गुरुं तथा।
ऋतूंश्च मरुतश्चैव मुनींस्तक्षकमेव च।।

मन्त्रान्विद्याधरांश्चैव क्रमेणावाह्य चार्चयेत्।
'शं नो देवी' ति मन्त्रेण 'इमा ओषधय'इत्यपि।।

1. चूर्णोत्सवानन्तरम्।

2. चूर्णोत्सवसमये।

'अभि त्वा शूर'चत्वारि 'पूतस्तस्ये'ति च क्रमात्।
कलशैः पञ्चभिः स्नाप्य तत्तद्द्रव्यान्तरे क्रमात्।।

'वारीश्चतस्र'इत्युक्त्वा चोपस्नानं समाचरेत्।
शिष्टाभिः कलशाद्भिश्च चक्रादीनभिषिच्य च।।

प्रविश्य तु जलं तत्र वरुणं चार्चयेत् क्रमात्।
हस्ताभ्यां चक्रमादाय देवं भक्तैस्समन्वितः।।

आचार्यः प्रथमं तीर्थे चक्रं स्पृष्ट्वाऽवगाहयेत्।
नाभिदघ्नजले तत्र जलमध्ये तु सुस्थितः।।

चक्रं देवं हृदि स्थाप्य हस्ताभ्यां धारयन् दृढम्।
'ये ते शतं' समुच्चार्य प्राङ्मुखो वाप्युदङ्मुखः।।

निमज्जयेत्तदा चक्रं सर्ववाद्ययुतं गुरुः।
जनास्सर्वे च तत्तीर्थे स्नात्वा विगतकल्मषाः।।

भवेयुरश्वमेधस्य फलं च समवाप्नुयुः।
ततस्तीरे प्रतिष्ठाप्य विष्टरे चक्रमुत्तमे।।

कुर्यादवभृथस्नानं शुद्धस्नानोक्तमार्गतः।
ततो विसृज्य वस्त्रादीन् देवं चान्यैर्विभूष्य च।।

तत्रैव स्नानसम्भारान् संभृत्य विधिना गुरुः।
देवीभ्यां सह देवेशं स्नापयेत्पूर्ववत्प्रभुम्।।

अलङ्कृत्य विशेषेण कुर्यादर्घ्यान्तपूजनम्।
पश्चाद्देवं समादाय सर्वालङ्कारसंयुतम्।।

शाकुनं सूक्तमुच्चार्य नीत्वा ग्रामं प्रदक्षिणम्।
देवालयं प्रविश्याथ स्थाप्य चास्थानमण्डपे।।

पाद्यादिभिस्समभ्यर्च्य वेदानध्यापयेत्क्रमात्।
मुहुः पुष्पाञ्जलिं दत्वा जीवस्थाने निवेशयेत्।।

चक्रादीनपि चादाय तत्तत्स्थाने निवेश्य च।
पुण्याहं वाचयित्वा तु प्रोक्षणैः प्रोक्षणं चरेत्।।

नित्यपूजां समाप्यैव हविर्दद्याद्विशेषतः।
यागशालां समासाद्य हूत्वाऽग्निषु च वैष्णवम्।।

कुम्भस्थां शक्तिमादाय ध्रुवबेरेऽवरोपयेत्।
अन्तहोमं च हूत्वाऽग्निं नित्यकुण्डे प्रणीय च।।

तद्रात्रौ नित्यहोमान्ते बलिं दत्वा च पूर्ववत्।
पश्चाच्चक्रं विना दद्यात् बलिं शुद्धान्नकल्पितम्।।

पूर्वोक्तेनैव मार्गेण सर्वत्र बलिमाचरेत्।
चैत्यस्थाने प्रपायां तु उद्याने वृक्षमूलके।।

तटाके निर्झरे कूपवापीवल्मीकपार्श्वके।
श्मशानेऽन्यत्र देवाग्रे वीथ्यन्तेषु च निक्षिपेत्।।

**स.५६.२० - ४२**

अलङ्कृत्य तथा देवं यानमारोप्य [1]पूर्ववत्।

1. उत्सवग्रामप्रदक्षिणवत्।

चक्रादींश्च तथा याने हस्तेनैवाथवा नयेत्।।

कारयेत विधानेन तथा ग्रामप्रदक्षिणम्।
एवं प्रदक्षिणं कृत्वा तीर्थस्नानाय संव्रजेत्।।

सिन्धुं पुण्यनदीमब्धिं नदं वापि सरोऽथवा।
निर्झरं वा तटाकं वा शुद्धतोयं मनोरमम्।।

पर्वकाले समुद्राम्बु पुण्यमुक्तं न चान्यदा।
एषूक्तेषूत्तरं ग्राह्यं पूर्वालाभे विजानता।।

जलाशयं तु तत्पुण्यं विष्ण्वालयसमीपतः।
गङ्गाजलसमं ज्ञेयं विष्णुपादोपसेवनात्।।

स्वच्छं रम्यं विशुद्धं च यत्र स्याच्च बहूदकम्।
गच्छेद्धनुसहस्राभ्यामर्वागूर्ध्वं न च व्रजेत्।।

तीर्थं गत्वैव तत्तीरे प्रपां कृत्वा च शक्तितः।
अलङ्कृत्य वितानाद्यैर्धूपैर्दीपैरथाङ्कुरैः।।

स्थापयेत्तत्र देवेशं चक्रादीन् पूर्वतो न्यसेत्।
पूर्ववत् कलशान् पञ्च तन्तुना परिवेष्टय च।।

रत्नोदैरक्षतोदैश्च कुशोदैश्च यवोदकैः।
चन्दनोदैश्च सम्पूर्णान् कलशान् सम्प्रगृह्य तान्।।

मध्ये प्रागादिपरितश्चतुर्दिक्षु च संन्यसेत्।
एकादशोपचारैश्च कलशानर्चयेत् क्रमात्।।

देवदेवं च पाद्याद्यैरर्चयेदष्टविग्रहैः।
'इषेत्वोर्जेत्वा'दि तथा गायत्रीं वैष्णवीं जपन्।।

रत्नोदैः प्रोक्षयेद्देवमक्षतोदैः कुशोदकैः।
यवोदैश्चन्दनोदैश्च प्रोक्षयित्वा ततः परम्।।

शिष्टैस्तत् कलशोदैस्तु तच्चक्रमभिषेचयेत्।
देवं प्रणम्य तत्तीर्थे ततश्चक्रं निमज्जयेत्।।

यजमानस्तथाऽन्ये च भक्ताः सर्वे जनास्तथा।
स्नानं कुर्युस्तदा तीर्थे ध्यायन्तो विष्णुमव्ययम्।।

देवस्य सन्निधौ तत्र स्नाता भक्त्यैव ये जनाः।
सर्वपापविनिर्मुक्ता विष्णुलोकमवाप्नुयुः।।

ध्यायेन्नारायणं नित्यं स्नानादिषु च कर्मसु।
इति दक्षादिधर्मज्ञाः प्राहुस्सर्वे तपोधनाः।।

अथवा देवदेवं तं वस्त्रादींश्च विसृज्य च।
वस्त्रं च परिधाप्यान्यदर्चयित्वा तथैव च।।

पञ्चभिः कलशैर्देवं स्नपयित्वा यथाक्रमम्।
विष्णुसूक्तेन देवेशं तत्र तीर्थे निमज्जयेत्।।

प्लोतवस्त्रोत्तरीयाद्यैरलङ्कृत्य तथाऽर्चयेत्।
याने देवं समारोप्य पूर्ववत् संनयेत् पुनः।।

देवालयं प्रविश्यैव स्थापयेत्स्नपनालये।

स्नपनोक्तविधानेन कलशैः स्नापयेद्विभुम्।।

नवाम्बरोत्तरीयाद्यैर्भूषणैरभिभूष्य च।
माल्यैर्गन्धैरलङ्कृत्य नयेदास्थानमण्डपम्।।

विष्टरे स्थापयित्वा च देवं पूर्ववदर्चयेत्।
महाहविः प्रभूतं वा विधिनैव निवेदयेत्।।

विष्णुसूक्तं जपन्नेव प्रणामान् पञ्च चाचरेत्।
अर्चापीठेऽथवाऽभ्यर्च्य हविर्देवं निवेदयेत्।।

**ज्ञा.९३.१८०, १८१**

**क्रि.१४.१८२ - १९९**

ग्रामं प्रदक्षिणीकृत्य तीर्थस्थानं प्रविश्य च।।

तस्य तीरे प्रतिष्ठाप्य देवं चक्रं च पूर्ववत्।
कलशान् पञ्च संस्थाप्य देवस्याग्रे यथाविधि।।

मृत्कुशैर्गन्धपुष्पाद्भिरक्षतैश्च प्रपूरितान्।
क्रमान्मध्यादि सौम्यान्तं निधायाभ्यर्च्य देवताः।।

भूमिं चर्तूंश्च धातारं काश्यपं च प्रजापतिम्।
स्नापनोक्तैश्च मन्त्रैश्च प्रोक्ष्य देवेशमत्वरः।।

शिष्टाभिः कलशाद्भिस्तु चक्रं चैवाभिषिच्य च।
ततो देवं च चक्रं च तीर्थस्यान्तर्निमज्जयेत्।।

पुनस्तीरे प्रतिष्ठाप्य विष्टरे सोत्तरच्छदे।

कुर्यादवभृथस्नानं शुद्धस्नानोक्तमार्गतः।।

यजमानो गुरुश्चैव ऋत्विजः परिचारकाः।
स्नात्वात्र सह देवेन श्वेतवस्त्रोत्तरीयकाः।।

देवदेवमलङ्कृत्य यानमारोप्य पूर्ववत्।
शुक्लमाल्यानुलेपाद्यैः स्वर्णसूत्राङ्गुलीयकैः।।

अलङ्कृतेन गुरुणा ऋत्विग्भिश्च तथाविधैः।
शाकुनं सूक्तमुच्चार्य स्वस्तिसूक्तसमन्वितम्।।

तोयधारासमायुक्तं न येद् ग्रामप्रदक्षिणम्।
तत्काले यजमानोऽपि प्रत्युत्थानं समाचरेत्।।

अलङ्कृत्यालयद्वारं पूर्णकुम्भाङ्कुरादिभिः।
दीपैश्च बहुभिस्तत्र देवदेवे समागते।।

तोयधारासमायुक्तं दीपैश्च बहुभिर्युतम्।
स्त्रीभिस्सुमङ्गलाभिश्च कारयित्वा प्रदक्षिणम्।।

पञ्च चित्रान्नपिण्डानि नीत्वा देवस्य मूर्धनि।
प्रदक्षिणं दिगीशानां नामभिः प्रणवादिभिः।।

नमोन्तैश्च चतुर्थ्यन्तैर्मध्ये च विसृजेत् क्रमात्।
ततः पुष्पाञ्जलिं दत्वा प्रविश्याभ्यन्तरं पुनः।।

स्नपनोक्तक्रमेणैव स्नपनं सम्यगाचरेत्।
महाहविः प्रभूतं वा समभ्यर्च्य निवेदयेत्।।

जीवस्थाने प्रतिष्ठाप्य प्रणमेद्दण्डवद्भुवि।
यागशालां समागत्य हुत्वाग्निषु सवैष्णवम्।।

तत्तत्कुम्भगतां शक्तिं ध्रुवे सम्यङ्निवेश्य च।
नित्यकुण्डे प्रणीयाग्निम् उपतिष्ठेत भास्करम्।।

नित्यकुण्डेप्यशक्तोऽपि पूर्वोक्तक्रममाचरेत्।

**वा.३२**

सुदर्शनं समादाय गच्छेद् ग्रामप्रदक्षिणम्।।

पश्चाद्याने समारोप्य बलिचक्रादिपूर्वकम्।
अथवा केवलं चक्रं गच्छेयुर्भ्रमणं चरेत्।।

बलिबेरं विना चेत्तु उत्सवं नैव कारयेत्।
तटाके देवखाते वा सरिद्वा निर्झरेऽथवा।।

महातटाके नद्यादौ निर्झरेऽपि समाश्रिते।

प्रपां कृत्वा तु तत्तीरे विष्टरं तत्र निक्षिपेत्।
उर्ध्वे संस्थाप्य देवेशं पाद्यमाचमनं ददेत्।।

अग्रे नवपदं कृत्वा लाञ्छयित्वा विचक्षणः।
उर्ध्वे धान्यं विकीर्यैव कलशान् स्थापयेत्क्रमात्।।

कूर्चेनादाय तद्वारि बलिबेरस्य मूर्धनि।
तिसृभिः प्रोक्षयेत्पश्चात् देवेशं चाभिषेचयेत्।।

मूर्तिचक्रं यदि स्यात्तु बलिबेरं विनाकृतम्।

तत्रोत्सवस्य देवस्य प्रोक्षयित्वा समाहितः।।

पश्चादाचमनं दद्याद् देवदेवं प्रणम्य च।
चक्रं देवं समानीय हस्ताभ्यां बन्धयेद्दृढम् ।।

हृत्प्रदेशे तु संस्थाप्य शनैर्गत्वा जनैस्सह।
'येते शतं' समुच्चार्य वरुणं सम्यगर्चयेत्।।

नाभिमात्रप्रमाणे तु जलमध्ये तु संस्थितः।
सर्ववाद्यसमायुक्तं नृत्तगेयादिना सह।।

निमज्ज्यैव च तं देवं पूर्वोत्तरमुखं क्रमात्।
जनास्सर्वे समभ्युक्ष्य सर्वपापं व्यपोह्य च।।

नित्यस्नानोक्तमार्गेण देवेशं स्नापयेत्क्रमात्।
प्लोतवस्त्रोत्तरीयाद्यैः देवेशं समलङ्कृतम्।।

हविर्विनात्र कुर्यात्तु इति शास्त्रस्य निश्चयः।
[1]अथवा निवेद्यमेवेति केचित्पक्ष उदाहृतः।।

यानमारोप्य तं देवमग्रे चक्रं नयेत्क्रमात्।
चतुर्दिक्षु चतुर्वेदैः घोषयित्वा समाहितः।।

अत्वरन् तत्र आगच्छेत् गोपुरात् प्रमुखे स्थितः।
श्रीदेवीं समलङ्कृत्य नारीभिस्समलङ्कृतम्।।

---

1. पा०. अथवात्र निवेद्यं च

दीपं कृत्वापसव्येन सव्ये पुष्पं तु धारयेत्।
दासीश्चैव समाहूय सायं रक्षां समुद्धरन्।।

देवं देव्यौ च संवीक्ष्य नारीभिः परितो नयेत्।
तोयधारासमायुक्तं नारीभ्यामग्रतो नयेत्।।

प्रदक्षिणं शनैर्गत्वा पश्चादालयमाविशेत्।
पूर्वस्थाने तु तां देवीं स्थापयेद्देशिकोत्तमः।।

पश्चाद्देवं समानीय हर्म्यमेकं प्रदक्षिणम्।
अग्रे तद्द्वारपार्श्वे वा स्थित्वा सम्यक् समाहितः।

भक्तैरन्यजनैर्वीक्ष्य गीर्भिस्सम्मानपूर्वकम्।।
ऋग्वेदादि चतुर्वेदान् श्रावयेद्देवसन्निधौ।

आस्थाने त्वग्रतः स्थित्वा आचार्यः प्रीतमानसः।
विष्णुमन्त्रं शतं जप्त्वा विष्णुमेवापि चिन्तयन्।।

पश्चाद् भक्तान् विसृज्यैव त्वालयान्तः प्रवेशयेत्।
जीवस्थाने प्रतिष्ठाप्य पुण्याहमपि वाचयेत्।।

प्रोक्षयेद्देवदेव्यौ च नित्यपूजां समाचरेत्।
महाहविः प्रभूतं वा हविः सम्यङ्निवेदयेत्।।

पानीयाचमने दत्वा मुखवासं प्रदापयेत्।

**अ.२९**

यानेष्वारोपयेद्देवं सर्वालङ्कारसंयुतम्।

ग्रामप्रदक्षिणं कृत्वा चक्रं च सह वा चरेत्।।

अथवा चालयं गत्वा देवदेवं सलक्षणम्।
चक्रादिना सह चक्रमेव ग्रामप्रदक्षिणम्।।

समुद्रं वा नदीं वापि तटाकं वा यथार्हकम्।
देवालयसमीपे तु तीर्थस्नानं प्रकल्पयेत्।।

तत्र स्थानं च कृत्वा तु प्रपां वा कूटमेव वा।
पञ्चवर्णैरलङ्कृत्य दर्भमालाभिर्वेष्टयेत्।।

यानस्थं देवमादाय तीर्थस्नानं प्रवेशयेत्।
पीठे तत्र सुसन्न्यस्य तथा चक्रादयः क्रमात्।।

गङ्गा च यमुना चैव वेणी सिन्धुःसरस्वती।
कैशिकी नर्मदा चैव शोणा गोदावरी भवेत्।।

तीर्थानि यानि चासाद्य अर्चयित्वा विधानतः।
दूराद्देवालयात्तीर्थं तीर्थवारिसुसंग्रहम्।
पूर्वोक्तेनैव मन्त्रैण देवस्याभिमुखे सुधीः।।

आलयाभिमुखे कुर्यात् तीर्थं सम्यक् समाचरेत्।
पुण्यवृक्षो यदि भवेत् छायायामालयं चरेत्।।

रात्रौ तु तीर्थकाले तु दिवा तोयं सुसङ्ग्रहेत्।
देवार्थं सङ्ग्रहेत्तोयं 'धारास्वि'ति च मन्त्रतः।।

वस्त्रेण क्षालयेत्तत्र कलशेन तु पूरयेत्।

धान्यराशिं सुसन्न्यस्य दर्भानुपरि विन्यसेत्।।

मध्ये कुशोदकं न्यस्य ऐन्द्रे गन्धोदकं न्यसेत्।
याम्ये पुष्पोदकं न्यस्य वारुणे चाक्षतं न्यसेत्।।

सौम्ये जप्योदकं चैव उपस्नानं पृथक् पृथक्।
न्यासं कृत्वा विधानेन वस्त्रेणोपरि वेष्टयेत्।।

अर्चयित्वा विधानेन कूर्चयुक्तं सहाक्षतम्।
तैलाभ्यङ्गस्य शुद्ध्यर्थम् आम्लेन परिशोधयेत्।।

शुद्धस्नानं च कृत्वा तु नववस्त्रं सुयोजयेत्।
मुहूर्ते समनुप्राप्ते दैवज्ञं सम्प्रपूजयेत्।।

वस्त्रं चैवोत्तरीयं च हेमपुष्पाङ्गुलीयकैः।
सशिष्यं पूजयेत्तत्र आचार्यं देववत्स्मरन्।।

पादौ प्रक्षाल्य चाचम्य देवेशं च नमस्कृतम्।
सर्ववाद्यसमायुक्तं नृत्तगेयसमन्वितम्।।

उभाभ्यां चैव हस्ताभ्यां दूर्वाङ्कुरयुगं हरेः।
मूर्धादिपादपर्यन्तं क्षिप्त्वा क्षिप्त्वा प्रणम्य च।।

'चत्वारि शृङ्ग'इत्युक्त्वा स्नापयेच्च कुशोदकैः।
'अभित्वा शूर'इत्युक्त्वा स्नापयेद्गन्धवारिणा।।

'इमा ओषधये'त्युक्त्वा स्नापयेदक्षतोदकैः।
'पूतस्तस्ये'ति जप्त्वा तु जप्योदैः स्नापयेत्क्रमात्।।

'वारीश्चतस्र' इत्युक्त्वा उपस्नानं पृथक् पृथक्।
अनपायिगणान् प्रोक्ष्य शुद्धस्नानं च कारयेत्।।

आचार्यस्सह चक्राद्यैः देवेशं चैव तज्जले।
'या सुगन्धे'ति मन्त्रेण मार्जये(मज्जये ?)त्सात्विकं तु तत्।।

देवेशेनैव(शं नैव) चक्रादि स्नापयेद्राजसं तु तत्।
सर्वाभिषेचनं चात्र तामसं चेति काश्यपे।।

वस्त्रं नवं प्रदातव्यं युग्मं चैव सुपूजयेत्।
युग्मं चैवोत्तरीयं च भूषणानामलङ्कृतम्।
गन्धैर्माल्यैरलङ्कृत्य पूजयित्वा यथाक्रमम्।।

चक्रादीनां तथाभ्यर्च्य यानेऽलङ्कारयेत्ततः।
याने चारोपयेद्देवं चक्रादीनां तथा भवेत्।।

ग्रामं गत्वा यथान्यायं पश्चादालयमाव्रजेत्।
तीर्थपार्श्वे तथा धीमान् ब्रह्मयज्ञार्थमण्डपे।।

कल्पितेऽलङ्कृतं देवं संस्थाप्यैवाथ राजवत्।
तत्रैव चासनाच्चक्रं स्नानं दिव्यस्सहाव्ययम्।।

संस्नाप्याभ्यर्च्य पूर्वोक्तं हविस्सम्यङ्निवेदयेत्।
अत्रैव पाचितान्नं वा स्वालये पाचितं तु वा।।

आनीय राजवत्तस्मिन् भक्त्या तत्र निवेदयेत्।
अस्ति चेद्भवनं विष्णोः समीपे तीर्थदेशतः।।

संस्थाप्य राजवत् तत्र आस्थाने मण्डपे तथा।
स्नापयेन्मण्डपे चात्र संस्थाप्यैवार्चयेत्क्रमात्।।

आसनक्रममभ्यर्च्य हविर्भिस्सन्निवेदयेत्।

नैमित्तिकबलिं प्रोक्तं तीर्थान्तस्नपनं चरेत्।
स्नपनान्ते प्रभूतं तु महाभूतबलिं क्षिपेत्।।

**नि.२९**

मध्याह्ने च ततो देवं देवीभ्यां चक्रसंयुतम्।।

ग्रामप्रदक्षिणं कृत्वा सर्वालङ्कारसंयुतम्।
समुद्रं नदीं वा गच्छेयुः अन्यच्छुद्धं मनोरमम्।।

विष्णवालयसमीपस्थतोयं पावनमुच्यते।
तस्मात्तत्तीरमासाद्य चैतान् संस्थाप्य विष्टरे।।

प्रमुखे प्राङ्मुखं चक्रं संस्थाप्य स्थण्डिलोपरि।
चक्रस्य पश्चिमे पार्श्वे स्थण्डिलं कल्पयेद्बुधः।।

धान्यराशौ तु मृत्पुष्पगन्धाक्षतकुशोदकैः।
कलशाः पञ्च सम्पूर्णा मृत्सहेतोदकं बुधः।।

प्रागादिषु चतुर्दिक्षु पुष्पादीनि सुसन्न्यसेत्।
अष्टोपचारैरभ्यर्च्य स्नपनोक्तविधानतः।।

तज्जले देवमभ्युक्ष्य शिवे चक्रं यथाक्रमम्।
अर्चयित्वा तु संस्नाप्य मृत्तोयादीन् पृथक्पृथक्।।

प्रमुखे स्थाप्य चाभ्यर्च्य देव्यौ संस्नापयेत्ततः।
तीर्थतोयेन देवेशं देवीभ्यां चक्रसंयुतम्।।

मज्जयेत्प्रमुखेनैव 'आपोहिष्ठामया'दिभिः।
यजमानस्तथा चान्ये भक्त्या परमया युताः।।

तत्तीर्थतोये स्नाता ये ते जनाः पुण्यभागिनः।
मुच्यन्ते सर्वपापेभ्यो विष्णुलोकं समाप्नुयुः।।

विष्टरे स्थाप्य देवेशं माल्याद्यैः स्नानमाचरेत्।
प्लोतवस्त्रोत्तरीयाद्यैः अलङ्कृत्य यथोचितम्।।

देवीभ्यां देवदेवेशं यानमारोप्य पूर्ववत्।
धूपदीपसमायुक्तं जलधारासमायुतम्।।

ग्रामं प्रवेश्य देवेशं स्वस्तिसूक्तसमन्वितम्।
पूर्णकुम्भसमायुक्तं दीपाङ्कुरसमायुतम्।।

आचार्यस्यार्चकादीनां प्रत्युत्थायाभिवन्द्य च।
जलपुष्पान्तसंयुक्तं पात्रं सङ्गृह्य यत्नतः।।

अष्टाक्षरेण मन्त्रेण देवस्य मकुटोपरि।
त्रिः प्रदक्षिणमावर्त्य पुरतः प्रक्षिपेत्ततः।।

हारिद्रेण समायुक्तानन्नपिण्डान् प्रगृह्य च।
प्रदक्षिणं पूर्ववत्कृत्वा महादिक्षु विदिक्षु च।।

दक्षिणां च ददेत्पश्चात् तत्तन्नामान्युदीरयन्।

'विष्णुस्त्वां रक्ष' मुच्चार्य ऊर्ध्वपुण्ड्रमथाचरेत्।।

देवालयं प्रविश्यैव विष्णुसूक्तसमन्वितम्।
आस्थानमण्डपे स्थाप्य जयशब्दं च घोषयेत्।।

स्नपनोक्तक्रमेणैव देवेशं स्नापयेद् बुधः।
देव्यावपि च शुद्धाद्भिः अर्चयित्वा विधानतः।।

महाहविर्निवेद्यैव क्षमस्वेत्यनुमान्य च।
विष्णुसूक्तेन संस्तूय प्रणाममपि कारयेत्।।

देवेशस्योत्सवस्यार्थं स्नानार्थं ये समागताः।
ते पूजयातिसम्प्रीताः सर्वे यान्तु यथागतम्।।

इत्युक्त्वा देवदेवेशं ऋग्यजुः सामाथर्वभिः।
वैष्णवैरपि संस्तूय प्रणमेद्भक्तिसंयुतम्।।

**य.४२.३९ - ५४**

अवरोप्य च देवेशं यानाच्चक्रादिभिः सह।
मन्दिरं सम्प्रविश्यैव चाऽस्थाने सन्निवेशयेत्।।

संस्थाप्य विष्टरे देवं देवीभ्यां सह वा विना।
चक्रादीन् पूर्ववत् स्थाने स्थापयेत्क्रमशः सुधीः।।

प्रमुखे स्थण्डिलं कृत्वा नवभागं विभज्य च।
द्रव्येणाऽपूर्य कलशान् नादेयेन ततो बुधः।।

गायत्रीमन्त्रमुच्चार्य मध्ये सिद्धार्थकं न्यसेत्।

प्राच्यां तु अक्षतोदं स्याद्गन्धोदं दक्षिणे तथा।।

कुशोदं पश्चिमे पश्चाज्ञप्योदं चोत्तरे तथा।
विदिशासु च मध्ये तदुपस्नानान् न्यसेत्क्रमात्।।

ततोऽधिपान्तसमभ्यर्च्य पुण्याहमपि वाच्य च।
देवेशमपि चक्राद्यैः समभ्यर्च्य च पूर्ववत्।।

प्रणम्य देवदेवेशमादाय कलशांस्तथा।
मन्त्रेण प्रोक्ष्य देवेशं शेषतोयैः सुदर्शनम्।।

अभिषिच्य तथा धीमान् देवमानम्य पूर्ववत्।
हस्ताभ्यां देवमादाय देवैः पारिषदैर्युतम्।।

प्रविश्य देवखातं तद्वरुणं तत्र चार्चयेत्।
आचार्यश्चापि तत्तीर्थे चक्रमादाय गाहयेत्।।

पश्चात्संस्नाप्य चक्रादीनास्थाने देवसन्निधौ।
श्वेतवस्त्रेण संवेष्ट्य पादौ प्रक्षाल्य मन्त्रवित्।।

तथाऽऽचम्यैव पूर्वोक्तं प्राणायामं च कारयेत्।
ततो विसृज्य वस्त्रादीन् देवं चान्यैर्विभूष्य च।।

तत्रैव स्नानसम्भारान्तसंभृत्यैव च पूर्ववत्।
संस्थाप्य चासने देवं तैलं चैव विचक्षणः।।

देवीभ्यां सह चक्राद्यैः स्नापयेत्पूर्ववत्प्रभुम्।
प्लोतवस्त्रं तथा दत्वा स्थापयेद्यौगिकासने।।

आसनोक्तोपचाराणि कुर्यादत्र हविर्विना।
पश्चाद्देवं समादाय सर्वालङ्कारसंयुतम्।।

धामप्रदक्षिणं कृत्वा जीवस्थाने विशेषतः।
देवीभ्यां सह संस्थाप्य चक्रादीन् स्थापयेत्तदा।।

समभ्यर्च्य च पूर्वोक्तं प्रभूतं चात्र सन्ददेत्।

## ७.१५.८ प्रकारान्तरेण तीर्थोत्सवाचरणम्

**य. ४२. ५४ - ६५**

अथवा पुण्यतीर्थं तद्दूरे देवालयाद्यदि।।

तत्तीर्थकालादन्यस्मिन्नाचार्यस्याप्यनुज्ञया।
तन्तुना वेष्टितं कुम्भं दोषैरन्यैर्विवर्जितम्।।

'दुहतां दिव'मित्युक्त्वा कुम्भमादाय पूर्ववत्।
चक्रदेवं समादाय पुण्यतीर्थं प्रविश्य च।।

ऊरुदघ्नजले गत्वा प्राङ्मुखो वाप्युदङ्मुखः।
चक्रस्याभिमुखे शिष्यस्तोयेशमभिपूज्य च।।

हस्ताभ्यां कुम्भमादाय मनसा संस्मरन् हरिम्।
'आद्यमभिगृह्णामी'त्याधावमभिगृह्य च।।

सापिधानं पुनः कृत्वा शिरसा धारयेत्तथा।
शङ्खकाहलसंयुक्तं स्वस्तिघोषसमन्वितम्।।

चक्रं चानुगतं कुम्भं देवं सम्यक्प्रवेशयेत्।

चूर्णोत्सवान्ते पूर्वोक्ते वीथ्यां तद्धाम पूर्ववत्।।

रथस्थमपि देवेशं प्राङ्मुखं वाप्युदङ्मुखम्।
संस्नाप्य गन्धतोयेन चक्रवीशामितैः सह।।

नववस्त्रेण सम्भूष्य समभ्यर्च्याष्टविग्रहैः।
प्रमुखे कुम्भमादाय सन्न्यसेत्तद्रथोपरि।।

चक्रवीशामिताद्यैश्च पुण्याहमपि वाच्य च।
तस्मिन् कुम्भजले तीर्थमावाह्याभ्यर्च्य पूर्ववत्।।

कुम्भस्थमपि तत्तीर्थं सुमुहूर्ते पुनर्गुरुः।
कूर्चेनैव समादाय प्रोक्षयेद्देवमव्ययम्।।

शिष्टतीर्थैः पुनश्चक्रं तन्मन्त्रेणाभिषेचयेत्।

### ७.१५.९ रात्रौ तीर्थोत्सवसंभवे सायमुत्सवाचरणम्

**क्रि.१४.१६६, १६७**

विषुवोपरागायनेषु तीर्थं रात्रौ भवेद्यदि।
तदा सायोत्सवं चापि कुर्यात् तीर्थदिने पुनः।।

द्वितीयाहःप्रभृत्येव द्विकालोत्सवमाचरेत्।

### ७.१५.१० समुद्रादौ तीर्थोत्सवः

**य.४२.७३ - ८७**

चूर्णोत्सवान्तेऽप्यथवा समुद्रादिजले शुभे।।

गच्छेत्तद्योजनादर्वाक् तस्य तीरं प्रवेशयेत्।

रथचक्रं जले यावन्मग्नं तावत्समस्थले।।

नीत्वा क्रमेण चात्रैव राजसं तीर्थमाचरेत्।
अवरोप्याथवा तीरे प्रभा(पा) मध्ये च विष्टरे।।

चक्राद्यैस्सह संस्थाप्य कलशानथ साधयेत्।
पुण्याहं वाच्य पूर्वोक्तं प्रोक्षयेत्कलशोदकैः।।

देवेशं च पुनश्चक्रं शिष्टैश्चैवाभिषेचयेत्।
सन्निधौ चक्रमादाय तस्मिंस्तीर्थे निमज्जयेत्।।

देवीभ्यां सह देवेशमथवा मज्जयेज्जले।
पश्चाद्देवं समादाय चाऽरामे तु मनोरमे।।

अन्यसौम्यालये वाऽथ पञ्चरात्रालयेऽथवा।
शालायां ब्रह्मयज्ञस्य किंचिद्रुद्रालयेऽथवा।।

मण्डपेऽलङ्कुते देवं स्थापयेत्पार्षदैः सह।
शुद्धस्नानोक्तमार्गेण स्नापयित्वाऽथ राजवत्।।

पूर्ववत्समलङ्कृत्य चक्रवीशामितैः सह।
हविर्विनैव नेवेद्यं प्रणम्यैवानुमान्य च।।

विनोदांश्च तथा कृत्वा कुसुमाञ्जलिमुत्सृजेत्।
ततोऽपराह्ले देवेशं सुमुहूर्ते शुभोदये।।

'रथन्तरमसी'त्युक्त्वा रथमारोप्य पूर्ववत्।

ग्रामप्रदक्षिणं कृत्वा मन्दिरं सम्प्रवेशयेत्।।

अथवा तज्जलाद्देवं स्नानान्ते च विशेषतः।
ग्रामप्रदक्षिणं कृत्वा स्नानवेद्यां सुसन्न्यसेत्।।

स्नापनं विधिना चात्र कृत्वा पूर्वोक्तमार्गतः।
प्लोतेनैव विमृज्याथ जीवस्थाने सुसन्न्यसेत्।।

समभ्यर्च्य च देवीभ्यां चक्रवीशामितैः सह।
महाहविः प्रभूतं वा निवेद्यात्र प्रणम्य च।।

आचार्यमपि सम्पूज्य प्रार्थनामन्त्रमुच्चरेत्।
'न्यूनातिरिक्तं यत्सर्वं क्षमस्वे'ति जनार्दनम्।।

**खि.३२.१६० - १६९**

तीर्थोन्मुखं देवदेवमनुगच्छेयुरादरात्।।

भक्तास्तीर्थेऽवगाहार्थं तीर्थराजं विशेषतः।
समुद्रं वा नदीं वापीं तटाकं वाऽथ निर्झरम्।।

तत्र पीठे समावेश्य देवदेवं जगद्गुरुम्।
देवदेवस्य पुरतः कलशान् पञ्च विन्यसेत्।।

तण्डुलोपरि वेद्यान्तु वस्त्रालङ्कारसंयुतान्।
मृत्तोयं मध्यमे न्यस्येत्पूर्वे चैव कुशोदकम्।।

पुष्पोदकन्तथा याम्ये गन्धतोयञ्च वारुणे।

सौम्येऽक्षतोदकं न्यस्य अधिदेवांत्समर्चयेत्।।

अलङ्काराणि च तत्रैव परितः स्थापयेत्ततः।
'अपोहिष्ठा'दिभिर्मन्त्रैः प्रोक्षयेच्छ्रीमहीपतिम्।।

तत्तन्मन्त्रं समुच्चार्य प्रोक्षयेत्कलशोदकैः।
चक्रं पश्चात् समभ्युक्ष्य शिष्टतोयैश्च स्नापयेत्।।

पश्चाच्चक्रं तीर्थतोये मुहूर्ते मज्जयेच्छुभे।
तत्काले सह चक्रेण कुर्युः स्नानं महाजनाः।।

पश्चादालयमाविश्य कलशैः स्नापयेद्धरिम्।
जीवस्थाने प्रतिष्ठाप्य प्रभूतं च निवेदयेत्।।

ततः सन्ध्यार्चनादीनि क्रमाच्चैव समाचरेत्।

**७.१५.११ पर्वताग्रादौ तीर्थोत्सवः**

**य.४२.६५ - ७३**

वास्तुभेदाद्विनान्यत्र पर्वताग्रे वने तथा।।

नदीतीरे समुद्रस्य पार्श्वेऽन्यस्मिन् मनोरमे।
आलयं यदि चेत्तस्मिन् प्रथमावरणादिषु।।

घोषणाद्युत्सवं सर्वमिच्छेच्चेत्पूर्ववच्चरेत्।
तीर्थे त्वावरणे यस्मिन् पुण्यवृक्षो भवेद्यदि।।

विदिक्षु दिक्षु वाप्यस्य छायायां तीर्थमाचरेत्।

पूर्वोक्तदेवखातं यदस्ति चेदालयाग्रतः।।

छायायां कलशन्यासं कृत्वैवाभ्युक्षणं चरेत्।
तथैव मज्जयेच्चक्रं देवेन सह वा जले।।

सात्विकं चोदितं चान्यत्तामसं चेति पठ्यते।
नास्ति चेत्तत्तथा कुम्भे तीर्थमादाय पूर्ववत्।।

छायायां पुण्यवृक्षस्य तीर्थं याने समाचरेत्।
यानस्थस्याऽचरेत्तीर्थं दोषो नास्त्यत्र तेन वै।।

राजसं तद्विदुश्चान्ये पीठस्थं चात्र केचन।
भक्तो जनश्चक्रतीर्थं धारयेच्छिरसा सह।।

तेन पापैः सुपूतात्मा विष्णुलोकं स गच्छति।

### ७.१५.१२ विषुवादौ तीर्थोत्सवे सद्यःकौतुकबन्धनम्

**क्रि.२६.१४६, १४७**

विषुवे चायने चापि ग्रहणे सोमसूर्ययोः।।

करोत्यवभृथं चेत्तत् सद्यः कौतुकबन्धनम्।
कृत्वोत्सवं च तीर्थं च तत्काले सम्यगाचरेत्।।

### ७.१५.१३ उद्दिष्टान्यदिने तीर्थोत्सवकर्तव्यक्रमः

**य.४७.१३२, १३४**

यद्दिने तीर्थमुद्दिष्टमन्यस्मिन्यदि सम्भवेत्।

हीनोत्सवविधानेन तद्दिने तीर्थमाचरेत्।

--------------------------------।।

एकाहादधिके चैव एकाहे चोत्सवे यदि।।

निर्दोषं तत्र कर्तव्यं तद्दिने तीर्थमाचरेत्।

### ७.१५.१४ तीर्थदिने रात्रौ बलिप्रदानम्

**स.५६.५६ - ६२**

तत्र तीर्थदिने रात्रौ देवेशमभिपूज्य च।
ध्वजे देवं च सम्पूज्य पूर्ववद्धविषा युतम्।।

प्रभूतं बलिमाहृत्य चक्रादींश्च विनैव तु।
देवालये च सर्वेभ्यो बलिं क्षिप्त्वा ततः परम्।।

तस्मिन् ग्रामेऽपि सर्वत्र पूर्वोक्तेन क्रमेण च।
पूर्ववच्च बलिं दद्यात् स्थानेषूक्तेषु मन्त्रवित्।।

चतुष्कोणत्रिकोणेषु द्विकोणेषु च सन्धिषु।
सर्वत्रापि बलिं दद्यात् तत्तत्स्थानेषु पूर्ववत्।।

मध्ये चापि सहास्थाने सर्वदेवालयेषु च।
चैत्यवृक्षस्य मूले च तटाकसरसां तथा।।

तीरे शून्यालये चापि श्मशानेऽपि महापथे।
अन्यत्रापि विविक्ते च देशे साधारणेऽपि च।।

तत्रस्थेभ्यस्तु भूतेभ्यः सर्वेभ्यश्च बलिं क्षिपेत्।

सर्वत्रापि बलिं दत्वा देवालयमुपाव्रजेत्।।

**खि.३२.१६९ - १७३ ; नि.२९ ; क्रि. १४. ११८**

### ७.१५.१५ आचार्यादीनां दक्षिणादानम्

**स.५६. ४३ - ४५**

वैष्णवस्यास्य यज्ञस्य यजमानो मुदाऽन्वितः।

आचार्याद्यर्चकेभ्यश्च परिचर्तृभ्य एव च।।

सर्वेभ्यः कर्मकर्तृभ्यो यथार्हं दक्षिणां ददेत्।

स्वस्थाने पूर्ववद्देवं स्थामयित्वाऽर्चयेत् क्रमात्।।

तत्तत्स्थाने तथाभ्यर्च्य चक्रादींश्च निवेदयेत्।

**ज्ञा.९३.१८१ ; नि.२९ ; क्रि. १४. ११८**

### ७.१५.१६ अवभृथानन्तरमुत्सवकरणनिषेधः

**प्र.२७.२४५, २४७**

यज्ञस्यावभृथोऽन्तः स्यान्नोत्सवस्तदनन्तरम्।।

अकृतोत्सवकार्याणि यथोक्तं पूर्वमाचरेत्।

नित्योत्सवं हरेः कुर्यात् नित्यश्रीर्नित्यमङ्गलः।।

हरिर्नारायणो देवो नालं देवास्तमर्चितुम्।

## ७.१५.१७ अवभृथस्नानफलम्

**वा.३२**

विष्णोरवभृथस्नानात् अनुस्नानाच्च यो नरः ।।

कोटिजन्मार्जितं पापं तत्क्षणादेव नश्यति।
यं यं कामयते सर्वं यः स्नायात् तत्फलं भवेत्।।

पादप्रक्षालमात्रे तु गङ्गा सर्वाघनाशिनी।
किं पुनर्दैवसर्वाङ्गं निमज्ज्य सलिलं बुधः।।

**स.५६.३३ - ३५ ; नि.२९ ; ज्ञा.९३.१८१**

★★★

# १६. ध्वजावरोहणम्

## ७.१६.१ उत्सवे ध्वजावरोहणम्

### वि.५४.३५९

तद्रात्रौ ध्वजावरोहणं कुर्यात्। कलशबलिद्रव्यैर्युक्तमन्नं कटाहे प्रक्षिपंत्। चक्रादीन्विना [1]पूर्ववदालयगतेभ्यो ग्रामे ब्रह्मादिभ्यश्च वाद्यघोषसमायुक्तं बलिं दत्वा, सन्धिस्थान् देवान् विसृज्य, वाद्यघोषं विना तद्ग्रामस्थदेवालयेषु शून्यागारे चैत्यवृक्षमूले मातृदुर्गास्कन्दविघ्नेशशास्तादीनां गृहेषु श्मशानसमीपे वापीकूपतटाकाऽऽरामस्थानेषु ग्रामचतुःसीमसु भूतक्रूरदेवस्थानेषु च एवं बलिं विक्षिप्य, अग्निसन्निधौ स्नात्वा, आलयं प्रविश्य, देवं प्रणम्य, ध्वजमन्त्रेण ध्वजावरोहणं कृत्वा, तद्रात्रावुत्सवान्तस्नपनञ्च कारयेत्। तद्दिनात् तृतीयायां पञ्चम्यां वा रात्र्यामेवं बलिं दत्वा ध्वजाऽवरोहणं कारयेदित्येके।

### स.५६.६३ ; क्रि.१४. ११९, १२०

### ज्ञा.९३.१८१, १८२

अथ ध्वजदेवमभ्यर्च्यं हविर्निवेद्य चक्रादीन् विना बलिद्रव्याणि गृहीत्वा आलये ग्रामे तत्सन्धिषु शून्यालये चैत्यवृक्षे जलाशय सभास्थान-गोष्ठान्यदेवागारादिषु बलिं निर्वाप्य स्नात्वा आलयं प्रविश्य ध्वजमासाद्य,

उत्सवेऽस्मिन् समायाताः सर्वे यान्तु यथाऽऽगताः।
समाप्त उत्सवोऽद्यात्र ध्वजोऽयमवरोप्यते।।

---

1. पूर्ववत् - उत्सवाङ्गबलिहरणविधिवत्।

इत्यानम्य ध्वजदेवं विसर्जयित्वा ध्वजमवरोपयेत्। अथवा तद्दिनादूर्ध्वं त्र्यहे रात्रौ वा ध्वजमवरोपयेत्।

**क्रि.९४.१९९ - २०२**

नवमे चोत्सवे चैव चतुर्दशदिने तथा।।

एकविंशोत्सवे चैव रात्रिपूजावसानके।
रात्रौ ग्रामबलिं दत्वा चक्रवीशामितैर्विना।।

उद्वास्य देवतास्सर्वाः ध्वजमागत्य वै पुनः।
ध्वजदेवं समभ्यर्च्य मुद्गान्नं विनिवेद्य च।।

ध्वजदेवं विसृज्यैव ध्वजं तमवरोपयेत्।

**वा.३२**

तद्रात्रौ नित्यपूजान्ते ध्वजं चाप्यवरोहयेत्।।

पुष्पयागात्परे वाथ ध्वजस्याप्यवरोहणम्।
बलिबेरं च चक्रं च विना कुर्यात् प्रयत्नतः।।

शुद्धान्नं चरुमादाय कटाहे प्रक्षिपेद् बुधः।
पूर्वोक्तेनैव मार्गेण सर्वत्र बलिमाचरेत्।।

चैत्यस्थाने प्रपायां तु उद्याने वृक्षमूलके।
तटाके निर्झरे कूपे वापीवल्मीकपार्श्वके।।

श्मशानेऽन्यत्र देवाग्रे वीथ्यन्ते तु समाक्षिपेत्।
अथवा कारयित्वैव सर्ववीथ्यन्तरे सति।।

तस्य देवालयाग्रे तु नित्यं तत्र बलिं क्षिपेत्।
मौनं सर्वत्र चागम्य वाद्यं तत्र सकृत् सकृत्।।

पश्चात् स्नानं प्रकुर्वीत उक्तकर्म समाचरेत्।
पश्चादालयमाविश्य गरुडं तं प्रणम्य च।।

मुद्गान्नं च निवेद्यैव दिनदेवान् समर्चयेत्।
ध्वजस्थं गरुडं पश्चात् गरुत्मन्तं च मन्त्रवित्।।

'हविष्मती' ति चोक्त्वा तु 'सुपर्णोऽसी'ति च ब्रुवन्।
एवं मन्त्रं समुच्चार्य तत्र कार्यं समाचरेत्।।

पश्चात्तद्ध्वजमादाय रज्जुभिः सहितं पुनः।
शिरसा धारयेद्विद्वानालये तु प्रदक्षिणम्।।

सहैवान्तः प्रविश्यैव देवपादे विनिक्षिपेत्।
ऊर्ध्वे पुष्पाञ्जलिं दत्वा दण्डवत्प्रणमेद्भुवि।।

एवं यः कुरुते भक्त्या तद्विष्णोः परमं पदम्।
कुम्भाच्छक्तिं समादाय ध्रुवे चारोपयेद् बुधः।।

अथ कुम्भं समादाय चक्रं चाभ्यभिषेचयेत्।
अथवा दण्डमूले तु तज्जलं विसृजेद् बुधः।।

पश्चाच्चक्रं समादाय जीवस्थाने प्रतिष्ठितम्।
अथवा कारयेद्विद्वान् पुष्पयागावसानके।।

ध्वजस्याप्यवरोहं तु कारयेदिति शासनम्।

**प्र.२५.२६२ - २६५**

पुनरालयमाविश्य स्नात्वा चाप्यग्निसन्निधौ।
ध्वजमूलं समासाद्य सर्ववाद्यसमायुतम्।।

ध्वजावरोहणं कुर्यात् ध्वजमन्त्रं समुच्चरन्।
तद्ध्वजं तु समादाय प्रादक्षिण्यक्रमेण वै।।

परीत्य मन्दिरं पश्चात् प्रविश्याभ्यन्तरं पुनः।
देवस्य पादमूले तु न्यस्य पुष्पाञ्जलिं ददेत्।।

क्षमामन्त्रं समुच्चार्य दण्डवत्प्रणमेद् भुवि।

**खि.३२.१७४**

उत्सवार्थं समायातास्सर्वे यान्तु यथागतम्।
शान्तिरस्त्विति चोक्त्वा तु पटं समवरोपयेत्।।

**अ.२९**

हुत्वा तु सर्वदैवत्यं ध्वजदैवत्यवारुणम्।।

ध्वजावरोहणं कुर्यात् पश्चात्तं विधिचोदितम्।

### ७.१६.२ षण्मूर्त्युत्सवादिक्रमः

**अ.२९**

अत ऊर्ध्वं तु कर्तव्य उत्सवक्रम उच्यते।।

एकभूमौ यथा कुर्यात् खिलोक्तेनैव मार्गतः।
पञ्चभूमि(मूर्ति)प्रतिष्ठा चेत् षण्मूर्त्योत्सव उत्तमः।।

मध्यमं चादिमूर्तेन तलोर्ध्वेश सह भवेत् ?।
अधमं चादिमूर्तेन यथाविभवविस्तरम्।।

चतुर्मूर्त्युत्सवं कुर्यात् चतुर्मूर्तौ तथैव च।
पञ्चमूर्तिविधानेन औत्सव प्रतिमां बुधः।।

सर्वत्र चैकबिम्बं तु कृत्वा चक्रादयस्तथा।
स्नानशृङ्गारसर्वाणि तस्मिन् कृत्वोत्सवं तथा।।

अन्यांश्च बलिहोमादीन् तलं प्रति पृथक् पृथक्।
बहुभूमिविधानेन स्थानासनशयानके।।

सर्वैस्सहोत्सवं कुर्यात् अशक्त्यादौ समाचरेत्।
वासुदेवं वराहं च नरसिंहं च कल्पयेत्।।

सर्वेषु चोत्सवं श्रेष्ठं वासुदेवतले यथा।
कारयेदुत्सवं चान्यत् यथाविभवविस्तरम्।।

द्वितलं च तथा श्रेष्ठं तथादौ तु चतुर्बलम्।
उत्सवं स्नपनं चैव नैमित्तिकबलिं तथा।।

अग्रे चोर्ध्वतलं कुर्यात् मध्ये मध्यतलं भवेत्।
पञ्चमूर्तिविधानेन चतुर्मूर्तिविधिक्रमात्।।

द्वितलं त्रितलं वापि पृथक् चैव यथाक्रमम्।
ग्रामादौ चोत्सवं कुर्यात् नगरे पत्तनेऽथवा।।

पृथक् पृथक् चोत्सवं बिम्बं कल्पयेच्चोत्सवं पुनः।

तथा चक्रादयस्सर्वे तलं प्रति तलं प्रति।।

केवलं चौत्सवं बिम्बं चक्रादीन्नैव मध्यमे।
सर्वेषामादिभूमौ तु एकबिम्बं तु चोत्सवम्।।

तथा चक्रादयश्चापि कन्यसं बहुभूमिषु।
तथैव स्नपनं बिम्बं बलिबरे तथा भवेत्।।

तथाऽऽचार्यादयश्चापि परिचारादयस्तथा।
तथैव यागशालां च मण्डपादीन् तथैव च।।

पृथगेव विधाने तु सर्वं चैव पृथक् चरेत्।
आचार्यं तु तथैकं वा परिचारान् पृथक् पृथक्।।

बहुभूमिविमानेषु कर्तुर्यत्र तलेषु च।
भक्तिरस्ति तले तत्र कारयेदुत्सवादिकम्।।

परिपदैस्तथालाभेरुत्सवं कारयेत्तथा।
स्नपनं स्नापने यत्र तले नित्यं समाचरेत्।।

### ७.१६.३ उत्सवान्ते अपराधक्षमापणम्

**ज्ञा.९३.१८१**

देवेशं स्वस्थाने संस्थाप्य विशेषपूजां कृत्वा अष्टाक्षरेण पुष्पाञ्जलिं दत्त्वा प्रणम्य वैष्णवैः ऋग्यजुः सामाथर्वभिः मन्त्रैः संस्तूय 'स्वामिन्! देवेश! उत्सवाध्वरे प्रमादादप्रमादाद्वा प्रच्युतं न्यूनं तत् सम्पूर्णमित्यनुगृहाण प्रसीदे'ति दण्डप्रणामं कुर्यात्।

## ७.१६.४ उत्सवोपयुक्तपूजाद्रव्याणां विनियोगः

**अ.२९**

देवेशस्योत्सवार्थानि पूजाद्रव्याणि सर्वशः।।

आचार्यस्य ददेत्सर्वम् उपयुक्तानि चैव हि।
अनुपयोग्यानि द्रव्याणि भूम्यां वै खानयेद्बुधः।।

अन्येषां च प्रदानाच्च आभिचारिकमुच्यते।
तद्दोषशमनार्थाय क्षिप्रं शान्तिं च कारयेत्।।

## ७.१६.५ उत्सवादौ पदार्थिनामलाभे कर्तव्यम्

**क्रि.२६.१०४, १०५**

उत्सवे च प्रतिष्ठायां स्नपनादौ तथैव च।।

गुरुरेवाचरेत्सर्वम् अलाभेऽन्यपदार्थिनाम्।

## ७.१६.६ उत्सवाचरणफलम्

**ज्ञा.९३.१८२**

एतदुत्सवेन देवेशः सुप्रीतो भवेत्। अनेनैव गोब्राह्मणादि चातुर्वर्ण्यसमृद्धिः सस्यविवर्धनं मङ्गल्यं सर्वसम्पत्करमशुभनाशनं ग्रामादिशान्तिः सर्वकामावाप्तिश्च भवन्ति। एतेन सर्वे देवाश्च प्रीता भवेयुः। तस्माद्विष्णोरुत्सवं भक्त्या यः कुर्यात् सोऽयं रहस्यानि प्रकाशानि च पापानि पूर्वजन्मसु इह जन्मनि च कृतानि सर्वाणि मोचयित्वा सर्वकामानवाप्नुयात्। एवं यस्य विष्णोराल-

यार्चनमग्निहोत्रं शाश्वतं तिष्ठेत् स तद्विष्णोः परमं पदं गच्छति इति ब्रह्मवादिनो वदन्ति।

**खि.३२. १८१ - १८४**

एवं यः कारयेद्भक्त्या देवदेवस्य चोत्सवम्।
देहान्ते बन्धुभिः गच्छेद्विष्णुलोकन्तु पञ्चभिः।।

शान्तिस्स्यातु सर्वलोकानां दुःखानाञ्च निवारणम्।
वर्षदं सर्वलोकानां सस्यानामभिवृद्धिदम्।।

राष्ट्राभिवृद्धिदञ्चैव राज्ञाञ्च बलवर्धनम्।
ऋद्धिदं सन्ततीनां स्याद्वेदानामपि बृह्मणम्।।

भेरीपटहशङ्खानां यावदाप्नोति वै ध्वनिः।
पिशाचप्रेतरक्षांसि तावन्नैव विशन्त्यपि।।

★★★

# १७. त्रिदिनाद्युत्सवाः

## ७.१७.१ त्रिदिनोत्सवादौ दिनाधिपाः

**य.४३. ४५, ४६**

ब्राह्मं च सर्वदैवत्यं वैष्णवं च दिनत्रये।
उत्सवे द्विदिने ब्राह्मं वैष्णवं च दिनाधिपम्।।

एकाहे हरिरीशस्तु कथ्यते चैव सूरिभिः।
भक्त्यैव कारयेदेवं सर्वकामफलप्रदम्।।

## ७.१७.२ दिनत्रयोत्सवाचरणप्रयोगः

**य.४३.५ - ३८**

दुर्बलाय च भक्ताय चोत्सवोऽयं द्विजोत्तमाः।।

तीर्थमृक्षं च सङ्कल्प्य पूर्वमेव विचक्षणः।
तस्मात्तु दिवसात्पूर्वनक्षत्रेऽङ्कुरमर्पयेत्।।

सम्भाराणि च सम्भृत्य पूर्वरात्रौ विशेषतः।
रक्षादीन् स्नपनार्थाय कारयेत्पूर्ववत्सुधीः।।

प्रभाते देवमुत्थाप्य मध्याह्ने स्नपनं तथा।
कुर्याद्गुरुस्तु सायाह्ने तथा मृद्ग्रहणं चरेत्।।

न ध्वजारोहणं कुर्यात् त्रियहादौ विशेषतः।
औत्सवे द्विगुणं चार्च्य चक्राद्यैः सह बुद्धिमान्।।

दीक्षायै कौतुकं बद्ध्वा देव्यादीन् पूर्ववद्बुधः।
होमं हुत्त्वा बलिं दत्त्वा ग्रामादौ च तथा सुधीः।।

समलङ्कृत्य देवेशं देवीभ्यां सह वा विना।
प्रभामण्डलसंयुक्तं याने चारोपयेत्तथा।।

ग्रामं प्रदक्षिणं कृत्वा सर्वालङ्कारसंयुतम्।
सर्ववाद्यसमायुक्तं भक्तैः सर्वजनैः सह।।

बलिमार्गेण संयायात् दोषकृद् गमनेऽन्यतः।
तस्मात्प्रदक्षिणं नीत्वा प्रविशेदालयं पुनः।।

आस्थानमण्डपे देवं संस्थाप्याभ्यर्च्य पूर्ववत्।
नीराजनं च रक्षां च तथा कृत्त्वा गुरुर्बुधः।।

विसृजेत्कौतुकं पश्चाद्देवं देव्यादिभिः सह।
संस्नाप्य कलशोदैश्च शुद्धोदैर्वाऽथ केचन।।

संस्नाप्य तस्माद्देवेशमासने यौगिके तथा।
हविरन्तं समभ्यर्च्य देवं देव्यादिभिः सह।।

विनोदं परमे कृत्वा जीवस्थाने ततो हरिम्।
देवीभ्यां सह संस्थाप्य चार्चयेद्धविरन्तकम्।।

दण्डाङ्गं च नमस्कृत्य 'क्षमस्वे'ति जनार्दनम्।
तत्तत्स्थानेऽथ चक्रादीन् संस्थाप्यैवं निशां नयेत्।।

ततः प्रभाते धर्मात्मा प्रातरर्चावसानके।
देवं प्रणम्य चादाय मण्डपे स्थापयेत्तथा।।

चत्वारि चासनान्यत्र सङ्कल्प्यैव तथा बुधः।
तस्मिंस्तस्मिन्त्समभ्यर्च्य चासनोक्तोपचारकान्।।

कुर्यात्क्रमेण धर्मज्ञश्चासनोक्तैश्च मन्त्रकैः।
चक्रवीशामितान् पूज्य पुनर्होमं समारभेत्।।

परिषिच्य पावकं पश्चात्सर्वदैवत्यमेव च।
वैष्णवं पार्षदान्त्सर्वान् जुहुयात्स्वस्वमूर्तिभिः।।

ब्रह्मादि भूतपर्यन्तं क्रमेण जुहुयात्तथा।
बलिबिम्बान्नबिम्बाभ्यां चक्रवीशामितैः सह।।

ग्रामं गत्वा तथा मन्त्री सर्ववाद्यसमायुतम्।
देवानां च बलिं दत्त्वा पूर्ववत्समलङ्कृतम्।।

छत्रपिञ्छादिभिः सार्धं भक्तैरन्यैस्समावृतम्।
आलयं सम्प्रविश्यैव भूतपीठे समापयेत्।।

चक्राद्यान् बलिबिम्बं च संस्नाप्याभ्यर्च्य पूर्ववत्।
स्वे स्वे स्थाने प्रतिष्ठाप्य हविः सम्यङ्निवेदयेत्।।

पुनर्देवं प्रणम्यैव यावन्नेत्रमनःप्रियम्।
तावद्देवमलङ्कृत्य देवीभ्यां सह पूर्ववत्।।

सायाह्ने देवमारोप्य तथा ग्रामप्रदक्षिणम्।
कृत्त्वालङ्कारसंयुक्तं प्रविशेदालयं पुनः।।

समभ्यर्च्य तथाऽऽस्थाने निवेश्यैव हविर्ददेत्।
बलिं होमं तथा कृत्त्वा रात्रौ चोत्सवमाचरेत्।।

पुनरालयमाविश्य शुद्धोदैरभिषिच्य च।
कौतुकं मण्डपे देवं संस्थाप्यैव निवेदयेत्।।

कौतुकाबन्धनं कृत्वा शयने शाययेत्तथा।
प्रभाते देवमुद्धृत्य देवदेवं विना हविः।।

कुर्यात्तस्य च मध्याह्ने दिनस्योक्तमथोत्सवम्।
प्रविश्य मन्दिरं पश्चादास्थाने स्थापयेत्तथा।।

पूर्ववद्देवदेवस्य चूर्णं संस्कृत्य मन्त्रवित्।
तथैव सन्ददेद्विष्णोस्तैलं चूर्णं च पर्षदाम्।।

ततश्चूर्णोत्सवं कृत्त्वा तथैवावभृथं पुनः।
कारयेत्पूर्ववन्मन्त्री नद्यादौ विधिचोदितम्।।

स्नानान्ते देवमादाय तोयधारापुरस्सरम्।
सर्वालङ्कारसंयुक्तमालयं सम्प्रवेशयेत्।।

संस्नाप्य कलशैः पश्चात्तथैवानन्यधामनि।
प्राणस्थाने प्रतिष्ठाप्य समभ्यर्च्य निवेदयेत्।।

प्रार्थनामन्त्रमुच्चार्य प्राणायामं चरेत्पुनः।
शान्तिं हुत्वा तथा चाग्नौ गुरुं चाथ प्रपूजयेत्।।

पुष्पयागं ततः कुर्याद्विभवोपरि मन्त्रवित्।
कनिष्ठे चोत्तमं चेदमन्यद्विश्वं च पूर्ववत्।।

### ७.१७.३ दिनद्वयोत्सवाचरणप्रयोगः

**य.४३.३९ - ४३, ४५**

द्विदिनं चेत्तथा विद्वान् पूर्वोक्तं चाङ्कुरार्पणम्।
कृत्वा मृद्ग्रहणं चैव स्नपनादींस्तथा चरेत्।।

ततश्चक्रादिभिः सार्धं कौतुकं बध्य पूर्ववत्।
होमं बलिं तथा कृत्वा रात्र्युत्सवमथाचरेत्।।

सम्पूज्य मण्डपे तद्वत्कौतुकं बन्धयेत्तथा।
प्रभाते देवमुत्थाप्य कारयेत्तस्य चोत्सवम्।।

चूर्णोत्सवं तथा कृत्वा तीर्थस्नानं समाचरेत्।
स्नपनं च तथा कृत्वा जीवस्थाने ततोऽर्चयेत्।।

द्व्यहोत्सवे विशेषोऽयमन्यत्सर्वं च [1]पूर्ववत्।

---

1. त्रिदिनोत्सववदित्यर्थः

ब्राह्मं च सर्वदैवत्यं वैष्णवं च दिनत्रये।
उत्सवे द्विदिने ब्राह्मं वैष्णवं च दिनाधिपम्।।

## ७.१७.४ एकाहोत्सवस्य कालः

**वि.५४.३६२**

राज्ञो ग्रामस्य वा यजमानस्य वा जन्मर्क्षे विष्णुपञ्चदिनेषु वा आरभेत्[1]

**खि.३२.१८५ - १८७**

ऐकाहिकोत्सवं वक्ष्ये चतुर्मुखसमीरितम्।।

श्रवणे मासनक्षत्रे राजजन्मर्क्ष एव वा।
एकादश्याञ्च द्वादश्यां तथा मकरसंक्रमे।।

भक्तिश्रद्धे यदा स्यातां कुर्यादैकाहिकोत्सवम्।

**वा.४३**

पूर्वोक्तेन क्रमेणैव उत्सवं च समारभेत्।
अमावास्या यदा तस्यां श्रवणर्क्षे तथैव च।।

द्वादश्यां च द्वयोस्तद्वत् पौर्णमास्यां तथैव च।
अन्यस्मिन् पुण्यनक्षत्रे यजमानदिने तथा।।

**स.५७.५ , ६**

1. एकाहोत्सवमित्यध्याहारः

## ७.१७.५ एकाहिकोत्सवस्य त्रैविध्यम्

**स.५७. १, २**

एकाहिकोत्सवश्चापि पूर्ववत् त्रिविधः स्मृतः।
तीर्थोत्सवस्तथा चैव शान्तिकोत्सव इत्यपि।।

भक्त्युत्सवश्चेति तथा त्रिधा भेदश्च कथ्यते।

**वा.४३**

## ७.१७.६ तीर्थोत्सवप्रयोगः

**स.५७, ५ - २०**

आमावास्या यदा तस्यां श्रवणर्क्षे तथैव च।
द्वादश्योश्च द्वयोस्तद्वत्पौर्णमास्यां तथैव च।।

अन्यस्मिन् पुण्यनक्षत्रे स्वस्य जन्मदिनेऽथवा।
तस्मात्तद्दिवसात्पूर्वमङ्कुरानर्पयेद्बुधः।।

पूर्वेद्युरेव शर्वर्यां रात्रिपूजावसानके।
देवं प्रणम्य विधिना विशेषेणार्चयेत्तदा।।

हवींषि च निवेद्यैव मुखवासं निवेदयेत्।
शयनानि तथाऽऽस्तीर्य बद्ध्वा प्रतिसरं ततः।।

पूर्वोक्तविधिना देवं शाययीत विचक्षणः।
ततः प्रभाते स्नात्वैव देवमुत्थाप्य पूर्ववत्।।

अर्घ्यान्ताचमनान्तैश्च पाद्याद्यैर्वार्चयेद्धरिम्।
फलानि मुखवासं च यथाशक्ति निवेदयेत्।।

तीर्थात् पूर्वं तु तं देवं हविर्नैव निवेदयेत्।
ध्वजारोहणहीनं च तथा भूतबलिं विना।।

वस्त्रगन्धादिमाल्यैश्च सर्वैरपि च भूषणैः।
देवदेवमलङ्कृत्य यानमारोप्य पूर्ववत्।।

छत्रैः पिञ्छैर्ध्वजैरन्यैश्चामरादिपरिच्छदैः।
अलङ्कारैर्युतं देवं नयेद् ग्रामप्रदक्षिणम्।।

ग्रामं प्रदक्षिणं कृत्वा तीर्थस्थानं प्रवेश्य च।
तत्तीर्थतीरे देवेशं स्थापयित्वैव पूर्ववत्।।

पाद्याद्यैरर्घ्यपर्यन्तैरर्चयित्त्वा पुनः प्रभुम्।
देवस्य पुरतश्चक्रं स्थापयित्वा तमर्चयेत्।।

पूर्ववत्कलशान् पञ्च पूरयित्वैव संन्यसेत्।
तत्तद्देवांस्ततोऽभ्यर्च्य स्थापयेद्धरिमव्ययम्।।

शिष्टतोयेन तच्चक्रं स्नापयेत्तदनुक्रमात्।
तच्चक्रं च पुनस्तीर्थे मज्जयेद्देवसन्निधौ।।

तीर्थे सर्वे जनास्तत्र मज्जेयुर्देवसन्निधौ।
पश्चाद्देवं तथा नीत्वा मन्दिरं सम्प्रवेशयेत्।।

कलशैः स्नापयेद्देवं शुद्धोदैर्वाभिषेचयेत्।
अर्चयित्वा यथाशक्ति हवींष्यपि निवेदयेत्।।

एतत्तीर्थोत्सवं प्रोक्तं सर्वपापप्रणाशनम्।
तीर्थोत्सवं तु मध्याह्ने कारयेत प्रयत्नतः।।

**वा.४३**

### ७.१७.७ शान्त्युत्सवप्रयोगः

**स.५७.२१ - २५**

शान्त्युत्सवं तु कुर्याच्चेत् तद्धोमं च तथैव च।
प्रभूतं च बलिं दत्वा वस्त्राद्यैरपि भूषणैः।।

अलङ्कृत्य च देवेशं यानमारोप्य पूर्ववत्।
सर्वालङ्कारसंयुक्तं ग्रामं कुर्यात्प्रदक्षिणम्।।

अलङ्कृत्य च तच्चक्रं देवस्य पुरतो नयेत्।
प्रदक्षिणं तथा कृत्वा ततो गत्वा जलाशयम्।।

स्नपनं मज्जनं तद्वत्कृत्वाऽऽलयमुपाव्रजेत्।
एवमेव कृतो यस्तु शान्तिकोत्सव उच्यते।।

शान्तिकोत्सवमेवं तु पूर्वाह्ने कारयेद्बुधः।

**वा.४३**

### ७.१७.८ भक्त्युत्सवप्रयोगः

**स.५७.२५ - ३१**

भक्त्युत्सवं च कुर्याच्चेद्भक्त्या देवं प्रणम्य च।।

चक्रेणैव विना देवमर्चयित्त्वा हवींषि च।
निवेद्यैव विशेषेण वस्त्रमाल्यादिभूषणैः।।

अलङ्कृत्य च देवेशं यानमारोप्य पूर्ववत्।
ग्रामं प्रदक्षिणं कुर्यात् सर्वालङ्कारसंयुतम्।।

पश्चादालयमाविश्य स्नापयित्वा निवेदयेत्।
ध्वजारोहणहीने च हीने मृद्ग्रहणेऽपि च।।

होमे चक्रे विहीने च हीने भूतबलौ तथा।
भक्त्युत्सवे कृते तस्मिन् दोषो नास्तीति गीयते।।

भक्त्युत्सवं तु कुर्याच्चेदपराह्ने तु कारयेत्।
विधिनैव हरेर्भक्त्या विष्णोरुत्सवमाचरेत्।।

उत्सवं कारयेद्यस्तु सर्वान्कामानवाप्नुयात्।

**वा.४३**

**य.४३.४७ - ६९**

भक्त्युत्सवं तथा कुर्याद्देवं भक्त्या प्रणम्य च।
चक्रादिभिर्विना देवं देवीभ्यां सह वा विना।।

जीवस्थानात्समादाय स्थापयेन्मण्डपासने।
समभ्यर्च्य यथान्यायं पूर्वोक्तेष्वासनेषु च।।

समलङ्कृत्य देवेशं यानमारोप्य पूर्ववत्।

ग्रामं प्रदक्षिणं कुर्यात्सर्वालङ्कारसंयुतम्।।

पश्चादालयमावेश्य स्नापयित्वा निवेद्य च।
जीवस्थाने तथा स्थाप्य प्रणम्यैवानुमानयेत्।।

तदालयोत्सवं कर्तुमिच्छेद्भक्त्युत्सवं बुधः।
भक्तैः श्रद्धाकृतं यत्तदालयोत्सवमुच्यते।।

नैवाङ्कुरार्पणादींश्च कारयेदालयोत्सवे।
आस्थाने तु यथामार्गं समभ्यर्च्य निवेद्य च।।

देवीभ्यां सहितं वाथ रहितं वाथ चाव्ययम्।
अलङ्कृत्य यथामार्गं दर्शनीयं च सुन्दरम्।।

'रथन्तरमसी'त्युक्त्वा रथे चेद्धरिमव्ययम्।
'अश्वोऽसी'ति 'हयोऽसी'ति अश्वमारोपयेद्बुधः।।

गजं च 'इन्द्रस्य त्वे'ति गायत्र्या वा शुकं यदि।
'प्रतद्विष्णुस्तवत'इति शिबिकायां विशेषतः।।

यस्मिंश्च यजमानेच्छा तस्मिन्नारोपयेद्धरिम्।
नित्योत्सवविधानेन कारयेद्वा प्रदक्षिणम्।।

सर्ववाद्यसमायुक्तं धूपदीपसमायुतम्।
प्रदक्षिणं तदैकैकं कारयेत्प्रतिचूळिकम्।।

प्रथमावरणे चक्रं द्वितीये द्विः प्रदक्षिणम्।
यद्यपि स्युरथान्यानि नाचरेदिति केचन।।

अनेकावरणे हीने आलये तु प्रदक्षिणम्।

त्रिः कृत्त्वा पूर्ववत्स्थाने स्थापयेन्मूलधामनि।।

आस्थानमण्डपाद्बाह्ये विस्तृतं च भवेद्यदि।
प्रथमावरणे यत्तु कृत्त्वैकैकं तथाऽधिकम्।।

प्रदक्षिणं तथा कृत्त्वा सर्वालङ्कारसंयुतम्।
पश्चादन्तःप्रविश्यैव ह्यर्चावेद्यां विशेषतः।।

पाद्यदानं ततः कृत्त्वा मुखवासं निवेदयेत्।
समभ्यर्च्य च मध्याह्ने साये चोत्सवमाचरेत्।।

प्रातरभ्यर्च्य मध्याह्ने केचिदिच्छन्ति चोत्सवम्।
यस्मिन् काले तु काम्यार्चा नित्यपूजावसानके।।

कारयेत्सन्ध्ययोर्मध्ये केचिदाहुर्मनीषिणः।
इत्येवमालये श्रेष्ठं कारयेत्कर्तुरिच्छया।।

-----------------------------------

कौतुकं शयनं तद्वदङ्कुरार्पणपूर्वकम्।
तथैवं कारयेद्विद्वान्नैकाहे नैव चान्यके।।

पुराणस्तोत्रसूत्राद्यैर्विष्णोर्लीलादिभिः क्रमात्।
कुर्यात्तेषु विशेषेण विनोदं तदहस्स्वपि।।

पूर्वपक्षे धनुर्मासे चैकादश्यां विशेषतः।
वेदानध्यापयेत्सम्यग्गानैर्नृत्तादिभिस्सह।।

अन्यत्र च विशेषेण कालापेक्षां विनैव च।
यजमानानुकूलर्क्षे चारभेद्विधिचोदितम्।।

## ७.१७.९ एकाहोत्सवानुष्ठानप्रयोगः

### वि.५४.३६२, ३६३

तद्दिनात्पूर्वम् अङ्कुरानर्पयित्वा, सम्भारानाहृत्य, पूर्वेद्युर्नित्यार्चनावसाने देवं विशेषतोऽभ्यर्च्य, हविर्निवेद्य, पूर्ववत्प्रतिसरं बद्ध्वा, तथैव शाययित्वा, देवमुत्थाप्य, प्रातस्सन्ध्यार्चनान्ते नित्याग्निकुण्डे चुल्यां वा अग्निं परिषिच्य, तीर्थदिनोत्सवाधिदैवत्यं तदालयगतदेवानां मूर्तिमन्त्रैश्च आज्येन, आज्यमिश्रचरुणा वा हुत्वा, पूर्ववद्बलिं निर्वाप्य, देवमलङ्कृत्य यानमारोप्य, ग्राममालयं वा सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुक्तं प्रदक्षिणं कारयित्वा, आलयमावेश्य, चूर्णसंस्कारं कृत्वा, चूर्णेन स्नाप्य, देवाभिमुखे तथैव पञ्चकलशान् सोपस्नानान् विन्यस्य, देवमभ्युक्ष्य, तच्छिष्टतोयेन चक्रमभिषिच्य, तच्चक्रमादाय, तीर्थं प्रविश्य, निमज्य जनानां तीर्थदानं कृत्वा, अन्यद्वस्त्रं परिधाप्य, आलयमावेश्य, देवं शुद्धोदकैः संस्नाप्य, गन्धोदकैश्चाभिषिच्य, अभ्यर्च्य महाहविः प्रभूतं वा निवेद्य, पानीयाऽऽचमनमुखवासं दत्त्वा, पूर्वस्थाने संस्थाप्य, अभ्यर्चयेदित्याह मरीचिः

### ज्ञा.९३.१८१

### खि.३२.१८७ - १९८

पूर्वेद्युरेव शर्वर्यां रात्रिपूजावसानके॥

समभ्यर्च्य च देवेशं हविर्भिस्सन्निवेद्य च।
पूर्वोक्तेन विधानेन बध्वा प्रतिसरं ततः॥

शयने शाययेद्देवं शयनोक्तविधानतः।
प्रभाते प्रातरुत्थाप्य श्रीभूमिसहितं हरिम्॥

अर्घ्यान्तमर्चयित्वा तु वस्त्रालङ्कारभूषणैः।

सुमनोभिरलङ्कुर्याद् यावन्नेत्रमनः प्रियम्।।

वीशचक्रामितान् देवान् पूजयेद्वलिसंयुतान्।
हविर्निवेदयेद्बिम्बाभावे पात्रेऽथवार्चयेत्।।

उत्सवोक्तमलङ्कारं सर्वमन्यं प्रकल्पयेत्।
ध्वजस्यारोपणं नेष्टमङ्कुरारोपणं तथा।।

चक्रमग्रे बलिं पश्चात्ततो वीशं ततो बलिम्।
प्रस्थाप्यैवं क्रमात्पश्चादुत्सवोक्तक्रमेण वै।

उत्सवोक्तविधानेन बलिद्रव्यैस्सुसाधितैः।।
रथमारोप्य देवेशं पीठिकां रङ्गमेव वा।।

ग्रामप्रदक्षिणं कुर्याद्बलिमार्गक्रमेण वै।
प्राप्य देवालयं पश्चादुत्सवोक्तक्रमेण वै।।

वाद्यैश्चतुर्विधैर्गानैः नृत्तभेदैः स्तवैरपि।
गद्यैः पद्यैस्तथाऽन्यैश्च विभवैरभिनन्दयेत्।।

ततो हारिद्रचूर्णेन विकिरेत् देवमूर्धनि।
स्नपनोक्तेन मार्गेण ततः संस्नापयेद्धरिम्।।

प्रभूतञ्च हविर्दद्यात् हवींषि विविधानि च।
पूजयेच्च हरिं देवमेवं बहुलविग्रहैः।।

**य.४३.४४**

एकाहिकोत्सवं कुर्यात्सर्वं तीर्थदिनोक्तवत्।
कनिष्ठस्य कनिष्ठं स्यादिदं विश्वफलप्रदम्।।

**अ.२९**

एककालोत्सवं कुर्यात् सायङ्काले विशेषतः।।

ग्रामप्रदक्षिणं तत्तत्सन्ध्ययोरुभयोरपि।
संस्थापयेद्यथान्यायं सायमेव चरेत्क्वचित्।।

तृतीये च चतुर्थे च पञ्चमे षष्ठ सप्तमे।
अष्टमे नवमे चैवमुत्सवे च क्रमं चरेत्।।

## ७.१७.१० एकाहिकोत्सवफलम्

**खि.३२.१९९ - २००**

ऐकाहिकोत्सवं त्वेवं यो देवेशस्य कारयेत्।
सप्तजन्मकृतात्पापात्स मुच्येत न संशयः।।

ग्रामशान्तिश्च सर्वोपद्रवशान्तिस्तथा भवेत्।
अल्पयत्नेन सिद्ध्येत महायत्नकृतं फलम्।।

★★★

# १८. पुष्पयागोत्सवः

## ७.१८.१ पुष्पयागत्रैविध्यम्

**क्रि.१४.२०५**

शान्तिकः पौष्टिकः काम्य इति [1]स त्रिविधो भवेत्।

**प्र.२५.२६८**

## ७.१८.२ पुष्पयागस्योद्देश्यम्

**क्रि.१४.२३२**

उत्सवेऽज्ञातदोषाणां प्रायश्चित्तमिदं स्मृतम्।

**प्र.२५.२६९**

न्यूनं वाऽप्यधिकं चैतद्दोषोपशमनाय वै।

**वि.५४.३६१**

सर्वकामावाप्त्यर्थं सर्वदोषोपशान्त्यर्थं प्रायाश्चित्तार्थं च एतत् कुर्यात्। एतेनार्चाः न्यूनं सम्पूर्णं भवति।

**वा.३३**

न्यूनं चाप्यधिकं कर्म तद्दोषशमनाय वै।।

**अ.३०**

पुष्पयागमन्ते चैवं सम्पूर्णं भवति ध्रुवम्।।

---

1. सः - पुष्पयागः।

## ७.१८.३ पुष्पयागाचरणे निमित्तम्

### वि.५४.३५९

प्रतिष्ठान्ते चोत्सवान्ते विषुवे अयने सूर्यचन्द्रोपरागे युगान्ते सङ्क्रान्त्यां श्रवणे राज्ञो ग्रामस्य यजमानस्य च जन्मर्क्षे दुःस्वप्नराष्ट्रविभ्रमदुर्भिक्षाऽनावृष्टि-परचक्रभयमहाव्याधिपीडनादिसर्वोपद्रवेषु च विधिना देवस्य स्नपनं कृत्वा तदनन्तरे द्वितीयेऽहनि पुष्पयागं कुर्यात्।

### अ.३०

प्रतिष्ठान्ते चोत्सवान्ते स्नपनान्तेन्ययोस्तथा।।

### वा.३३

अन्ते तदुत्सवे चैव रात्रौ पूजावसानके।
बद्ध्वा प्रतिसरं कुर्यात् शाययित्वा हरिं परम्।।
प्रभाते देवमुत्थाप्य पाद्याद्यैरर्चयेत् क्रमात्।
सद्य एवाधिवास्यैव कारयेदिति केचन।।

## ७.१८.४ पुष्पयागाचरणकालः

### क्रि.१४.२०६

प्रातर्मध्यापराह्णेषु क्रमादेनं प्रकल्पयेत्।।

### प्र.२५.२६८

### खि.३३.४१

तीर्थाहाच्छ्वः परश्वो वा पुष्पयागोत्सवं चरेत्।।

**प्र.२१.२६७**

द्वितीयदिवसे तीर्थात्पुष्पयागं समाचरेत्।।

**वि.५४.३५९**

**क्रि.१४.२०२ - २०५**

दशमे दिवसे चैव दिने पञ्चदशे तथा।।

द्वाविंशदिवसे चैव पुष्पयागं समाचरेत्।
औत्सवप्रतिमाभावे कौतुके क्रियते यदि।।

तत्रैव तीर्थदिवसे प्रातस्सन्ध्यावसानके।
सम्यक् प्रतिसरं बद्ध्वा प्रातरुत्सवमाचरेत्।।

द्वितीयदिवसे तीर्थात् पुष्पयागं समाचरेत्[1] ।

### ७.१८.५ शान्तिकादि पुष्पयागे विशेषः

**प्र.२५.३०४**

पुष्पयागोत्सवः प्रोक्तो देवदेवस्य शार्ङ्गिणः।
शान्तिकादिविधाने तु कुर्यादङ्कुरपूर्वकम्।।

**वि.५४.३६०**

प्रतिष्ठोत्सवौ विना अन्येषु विधिनाऽङ्कुरार्पणं कृत्वा कर्म समारभेत।

---

1.नवाहः उत्सवश्चेत् दशमेऽहनि पुष्पयागः चतुर्दशाहश्चेत् पञ्चदशे, एकविंशत्यहश्चेत् द्वाविंशे इति विवेकः।

## ७.१८.६ पुष्पयागसाधनानि

**खि.३३.२१, २२**

एषां च पुष्पवत् पत्रमङ्कुराणि तथैव च ।।

फलं पक्वमपक्वं त्वक् साधनान्यर्चनं हरेः।

## ७.१८.७ पुष्पयागे ग्राह्यपुष्पाणि

**खि.३३.२२ - २७, ३४, ४२**

पद्मं श्वेतं तथा रक्तं स्थलपद्मं तथैव च।।

कुमुदं करवीरञ्च चणकं चम्पकं तथा।
मल्लिका जातिपुष्पञ्च नन्द्यावर्तञ्च नन्दकम्।।

पलाशपुष्पपत्राणि बकं दूर्वाग्रमेव च।
अन्यानि वन्यपुष्पाणि घ्राणदृष्टिप्रियाणि च।।

सर्वेषामपि पुष्पाणां सहस्रगुणमुत्पलम्।
तस्मात्पद्मं ततश्चापि पद्मन्तु शतपत्रकम्।।

तस्मात्सहस्रपत्रन्तु पुण्डरीकं ततः परम्।
पुण्डरीकसहस्राद्धि बकपुष्पं विशिष्यते।।

सौवर्णञ्च ततः पुष्पं तुलसी च ततोऽधिका।
तुलस्यास्तत्प्रसूनाच्च नान्यद् विष्णोः प्रियं भवेत्।।

---

अन्यैरनुक्तैश्च शुक्लैः गन्धवद्भिर्मनोहरैः।

साद्यस्कैस्साश्रितैः पुष्पैः देवदेवं समर्चयेत्।।

उत्सवान्ते राजराष्ट्रग्रामक्षेमाभिवृद्धये।
तुलसीपद्मपूर्वाणि ग्राह्यपुष्पाणि चाहरेत्।

**वा.३३**
करवीरोत्पलं चैव पुन्नागं तुलसी तथा।।

पद्मबिल्वादि चान्यानि यथोक्तविधिनाऽऽहरेत्।

**क्रि.१४.२१७, २१८**

पङ्कजं तुलसीं बिल्वं करवीरमथोत्पलम्।
नन्द्यावर्तं च कुमुदम् अपामार्गं तथैव च।।

विष्णुक्रान्तं च दूर्वाग्रम् एतान्येव क्रमात्पुनः।
पुष्पाञ्जलिप्रदानार्थं पुष्पाण्युक्तानि पूजने।।

### ७.१८.८ पुष्पयागे पुष्पत्रैविध्यम्

**खि.३३.४०, ४१**
पञ्चवर्णं तथा पुष्पं चतुर्वर्णं तथापि च।
त्रिवर्णञ्चोत्तमं प्रोक्तं द्विवर्णं मध्यमं भवेत्।।

अधमञ्चैकवर्णं स्यादिति पूर्वजशासनम्।

### ७.१८.९ पुष्पयागे पुष्पवर्णानुसारेण फलम्

**खि.३३.२०, २१**
श्वेतपुष्पं शान्तिकरं पीतं पुष्पं तु पौष्टिकम्।।

विद्वेषणं कृष्णपुष्पं रक्तं वश्यकरं भवेत्।
एषाञ्च पुष्पवत्पत्रम् अङ्कुराणि तथैव च।।

### ७.१८.१० पुष्पयागे वर्ज्यपुष्पाणि

**खि.३३.२९ - ३३**

पुष्पाणि वर्जनीयानि सन्ति तानि ब्रवीमि वः।।

किणिजं मुनिपुष्पञ्च धत्तूरं पटलं तथा।
तथाऽतिमुक्तकश्चैव पुन्नागं नक्तमल्लिका।।

योथकं क्षीरिकापुष्पं निर्गुण्डी लाङ्गिका जपा।
कर्णिकारं तथाऽशोकं शाल्मलीपुष्पमेव च।।

क्रतुभं कोविदारञ्च तिलपुष्पं तथैव च।
अङ्कोलं गिरिपर्णञ्च नीलान्येव च सर्वशः।।

अर्कपुष्पं तथाऽन्यानि अर्कपत्रस्थितानि च।
व्याघातपिचुमन्दानि सर्वाण्येतानि वर्जयेत्।।

**वि.५४.३६१**

पुराणम्लानवस्त्रनिक्षिप्तानि दुर्गन्धदुर्मनुष्याधिष्ठितदेशजातानि पुष्पाणि वर्जयेत्।
द्व्यहातीतानि पद्मानि पुराणानि त्यक्त्वा अन्यानि पुष्पाण्याहरेत्।

### ७.१८.११ पुष्पयागे विहितपुष्पालाभे प्रतिनिधिः

**खि.३३.२८, २९**

पुष्पालाभे तुलस्यास्तु पत्रैश्चाप्यर्चयेद्धरिम्।

तदलाभे च शाखाभिः शिफाभिरथवा मृदा।।

दूर्वालाभे परेणापि भक्तिमानर्चयेद्धरिम्।

खि.३३.३७ - ३९

शुद्धभूमौ तु पतितं क्षालनात् शुध्यते सुमम्।
अस्थाने पतितं यत्तु क्षालनेन न शुद्ध्यति।।

भ्रमराघ्रातपुष्पाणि ग्राह्याण्येव भवन्ति हि।
आह्निकं रात्रिकं चापि साद्यस्कं शोभनं मतम्।।

ऐकाहिकं तथा पुष्पं द्वितीयेऽहनि च क्वचित्।
तत्परस्मिन् वोपयुज्यादत ऊर्ध्वं परित्यजेत्।।

### ७.१८.१२ पुष्पयागे पुष्पचयनप्रकारः

**खि.३३.३५, ३६**

पादौ प्रक्षाल्य पाणी च आचम्य प्रयतो नरः।
कृताञ्जलिः पुष्पमेकं विचित्योद्दिश्य दैवतम्।।
पुष्परक्षकमानम्य विसृजेत्पूर्वदिङ्मुखम्।।

ततः पुष्पाणि चिनुयात् हस्तेनैव ततः परम्।
शुद्धे पात्रे निक्षिपेच्च एकैकन्तु पृथक्पृथक्।।

### ७.१८.१३ पुष्पयागप्रयोगः

**वि.५४.३६०, ३६१**

ततो देवेशमास्थानमण्टपे सर्वालङ्कारसंयुक्ते धान्यराशौ संस्थाप्य, अभिमुखे

धान्यपीठे पुष्पाधिदेवमाराध्य, पुष्पाणि संन्यस्य, नववस्त्रोत्तरीयाद्यैर्देवमलङ्कृत्य, त्रयोदशोपचारैरभ्यर्च्य, देवस्य दक्षिणे औपासनाग्निकुण्डं कृत्वा, आघारं हुत्वा, हौत्रं प्रशंस्य, देवेशादितदालयगतदेवानामावाहनं, जुष्टाकारं स्वाहाकारं कृत्वा, तथैव पुष्पेशस्य कृत्वा, देवस्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं प्राजापत्यं व्याहृतीश्च हुत्वा, पद्मेन बिल्वपत्रेण वा विष्णुगायत्रीमष्टोत्तरशतं हुत्वा, श्रीदेवत्यं श्रीसूक्तं श्रीदेव्याः, पञ्चभूमिदेवत्यं महीसूक्तं च महीदेव्याः, तदालयगतदेवानामपि मन्त्रान् मूर्तिमन्त्रान्वा हुत्वा, पुष्पाधिदेवत्यं वैष्णवान्तं द्वादशकृत्वो जुहुयात्।

ऋत्विजस्सर्वे 'दधिक्राव्ण'इति दधिप्राशनं कृत्वा नववस्त्रोत्तरीयकुण्डलादिभिरलङ्कृताः वाग्यता भवेयुः। शङ्खडिण्डिमकाहलझल्लरीमर्दलवीणावेणुमृदङ्गाद्यैः, दक्षिणे पुराणवचनैः पश्चिमे स्तोत्रध्वनिभिरुत्तरे सूत्रशिक्षादिभिश्च घोषयेत्। प्रागादिचतुर्दिक्षु चतुर्वेदानध्यापयेत्।

प्रागादिचतुर्दिक्षु दक्षिणवामयोर्वा आचार्य ऋत्विजश्च परात्परतरं गुह्याद्गुह्यतरं सर्ववेदार्थसारम् (सारभूतम्) अष्टाक्षरं द्वादशाक्षरं विष्णुगायत्रीं वा जपन्तः पुष्पाञ्जलिं दद्युः। अष्टोत्तरशतावसाने पाद्याद्यर्घ्यान्तमर्चयेत्। स्तनदघ्नेषु पुष्पेषु पुष्पाण्यधो नयेत्। स्तनदघ्नं विंशतिकृत्वो दद्यात् उत्तमं, द्वादशकृत्वो मध्यमम्, अष्टकृत्वोऽधमम्। एवं कृत्वा महाहविः प्रभूतं वा निवेद्य, पानीयाऽऽचमनं मुखवासं दत्वा, अनुलेपनादीनि कृत्वा अष्टाक्षरमहामन्त्रेण देवं प्रार्थयेत्। वैष्णवं व्याहृतीश्च हुत्वा अन्तहोमं जुहुयात्। ग्राममालयं वा नृत्तगीतवाद्ययुतं प्रदक्षिणं कारयेत्।

**खि.३३.४३ - ४९**

आस्थानमण्डपे देवमलङ्कृत्य यथाविधि।
सम्भारान् यागशालायां सम्भरेत्सकलान् गुरुः।।

सभ्याग्निकुण्डे त्वाघारं कृत्वा कुम्भं निधाय च।
पुष्पेषु पुष्पाधिदेवमावाह्याभ्यर्चयेत्ततः।।

पुष्पयागोक्तविधिना होमं कुर्याद्विचक्षणः।
हेमादिपात्रेष्वादाय पुष्पाणि विविधानि च।।

नृत्तगीतमहावाद्यघण्टानादादिभिस्सह।
पादयोर्देवदेवस्य अर्पयेद्भक्तिसंयुतः।।

चतुर्वेदादिमन्त्रांश्च चतुर्वेदांश्च श्रावयेत्।
पुष्पयागविधिः प्रोक्तः विस्तरेण मरीचिना।।

अत उक्तो मयाऽत्यन्तसङ्ग्रहः क्रमरक्षणे।
तत आराध्य देवेशमर्घ्याद्यैस्सर्वविग्रहैः।।

महाहविः प्रभूतं वा देवेशाय निवेदयेत्।
अपराधक्षापणञ्च प्रार्थयेयुः पदार्थिनः।।

**अ.३०**

स्नपने मण्डपे वापि कुर्यादास्थानमण्डपे।
अलङ्कृत्य यथान्यायं सम्भाराणि सुसङ्ग्रहेत्।।

शान्तवीशादीनां मध्ये धान्यैश्चापि हरेरपि।
चतुरश्रं स्थण्डिलं कृत्वा द्विहस्तायतविस्तृतम्।।

यथालाभोदयं कुर्यात् नववस्त्रेण वेष्टयेत्।
प्राच्यां वीशाय सङ्कल्प्य तत्तले दक्षिणेऽथवा।।

चक्रार्थं पश्चिमे धीमान् पङ्क्तीशस्योत्तरे तथा।
अमितस्यापि चाग्नेय्यां पुष्परक्षाय मण्डपम्।।

वृत्तं वा चतुरश्रं वा व्रीहिभिः परिकल्प्य च।
प्राच्यां वां दक्षिणे कुण्डम् औपासनविधिं चरेत्।।

आघारं पूर्ववत्कृत्वा वैष्णवान्ते तु पार्षदान्।
आवाह्याभ्यर्च्य मित्राद्यैः कल्पितां तत्र दक्षिणे।।

प्रणीते तु तथान्येषु जुष्टाकाराहुतीर्यजेत्।
प्रणम्य पश्चाद्देवेशं उदिते सति भास्करे।।

देवदेवं समादाय देवीभ्यां च विनात्र तु।
जीवस्थानात् सुसंस्थाप्य श्वभ्रे सम्यक् सलक्षणम्।।

कलशैः पञ्चविंशद्भिः शुद्धस्नानमथापि वा।
कारयेत्प्लोतवस्त्रान्ते स्थण्डिले 'भूरसी'ति च।।

संस्थाप्य वस्त्रपुष्पाद्यैः दीपांश्चैव विशेषतः।
स्थण्डिले शान्तमित्रादीन् जयादीन् परितः क्रमात्।।

दिक्पालांश्चात्र वात्यान्ताः पूजयेद्विधिचोदितम्।
वीशादींश्च ततोऽभ्यर्च्य अष्यार्का(का)नृत्विजं तु वा।।

सङ्ख्यार्चनां तु सङ्कल्प्य पाद्याद्यर्घ्यान्तमथाचरेत्।
नीराजनं विना चात्र छत्राद्याद्ययनादिभिः।।

वाद्यान्तं दर्शयित्वा तु पुनः पुनस्तथाचरेत्।
तण्डुलं तिलमाज्यं च ताम्बूलं क्रमशस्सुधीः।।

ऋग्वेदाद्यं ततो दद्यात् ताम्बूलान्तं ततः क्रमात्।
पश्चाद्देवं समभ्यर्च्य चासनेऽन्ये निवेश्य च।।

दीपान्ताच्छत्र ? सम्पूज्य प्रभूतं च निवेदयेत्।
चक्रादीनां हविर्दद्यात् हुत्वा पूर्णाहुतिं बुधः।।

विसृज्य सर्वानग्नींश्च गुरुं चात्र प्रपूजयेत्।
याने देवं समारोप्य कृत्वा धामप्रदक्षिणम्।।

जीवस्थाने प्रतिष्ठाप्य प्रणाममपि कारयेत्।

**वा.३३**

पूर्ववत्समलङ्कृत्य मण्डपान्ते विशेषतः।
प्रागन्तं चोत्तरान्तं च सूत्रस्य पदमाचरेत्।।

हस्तमात्रान्तरे चैव सूत्रेसूत्रे प्रतिप्रति।
षोडशात्र पदं कल्प्य लाञ्छयित्वा विचक्षणः।।

एवं कृत्वा तु कोष्ठं वै द्विशतं पञ्चविंशतिः।
सर्वकोष्ठानि बाह्यैव प्रादक्षिण्यक्रमेण वै।।

दीपाङ्कुराष्टमङ्गल्यान् निधाय परिकल्पयेत्।
पूर्ववत् परितः पंक्तौ सर्वान् देवान् समर्चयेत्।।

तत्पूर्वे तु पदेषु द्वे चारणाय प्रकल्पयेत्।
तत्पूर्वैकपदे चात्र न्यसेद् द्रव्यमेव च।।

तत्पूर्वैकपदं चात्र विनियोगाय कल्पितम्।
शेषं नवपदं मध्ये पूजास्थानं प्रकल्पयेत्।।

एवमावरणं पञ्च कृत्वाऽऽचार्यो मुदान्वितः।
करवीरोत्पलं चैव पुन्नागं तुलसी तथा।।

पद्मबिल्वादि चान्यानि यथोक्तविधिनाहरेत्।
विधिनाप्यर्चनाद्रव्यं सर्वं सम्भृत्य यत्नतः।।

कलशैः स्नापयेद्देवं यथोक्तविधिना चरेत्।
सर्वावयवसंपूर्णान् ऋत्विजो वरयेत्क्रमात्।।

मण्डपे चोत्तरे चैव वास्तुहोमः सुहूयताम्।
तिलतण्डुलसंमिश्रमर्चापीठं प्रकल्पयेत्।।

परितः पुरुषादीनां पीठं कृत्वा यथोचितम्।
ऊर्ध्वे पद्मं समालिख्य साष्टपत्रं सकर्णिकम्।।

दर्भानास्तीर्य तत्काले स्थापयेद्देवमव्ययम्।
परितस्तत्र चाभ्यर्च्य शिवादीन् पूजयेत्क्रमात्।।

सनकादींस्तथा कोणेष्वर्चयित्वा विचक्षणः।
न्यासोक्तद्रव्यपुष्पादीन् तत्पदेषु समाहरेत्।।

तत्पङ्क्तौ चोत्तरे पार्श्वे विष्वक्सेनं समर्चयेत्।
तत्पदेषु प्रादक्षिण्याद् अर्चयेत प्रयत्नतः।।

न्यक्षं विवस्वन्तं मित्रं क्षत्तारं पूजयेत्क्रमात्।
तत्कोणे चार्चयेद्देवं मार्कण्डेयं प्रजापतिम्।।

ईशानं च भृगुं चैव पीठे तु विधिनार्चयेत्।
सर्वदेवार्चनपदे चैशान्यादिप्रदक्षिणम्।।

रुद्रं च बलिरक्षं च वाग्देवीन्दुरवींस्तथा।
इन्द्रं श्रियं हविःपालं पावकं पश्चिमामुखान्।।

अङ्गारं स्कन्दं दुर्गां च मध्यस्थं च तथापरे।
सौरिं च सप्तरोहिण्यः सप्तमातृश्च पूजयेत्।।

उत्तराभिमुखेऽभ्यर्च्य प्राङ्मुखे तु विशेषतः।
निर्ऋतिं कालीं पुरुषं वरुणं च बुधं तथा।।

ज्येष्ठां पुष्पेशं वायुं च पूजयित्वा यथाक्रमम्।
शक्रं मुनींश्च भृग्वादीन् गङ्गां धन्यं निशाकरम्।।

पञ्चभूतानि चाभ्यर्च्य दक्षिणाभिमुखान् क्रमात्।
द्वारे च द्वारदैवत्यं प्रमुखे त्वनपायिनः।।

चतुर्द्वारं चतुर्दिक्षु कल्पयित्वा विधानतः।
पूर्वोक्तेन विधानेन पौण्डरीकं प्रकल्पयेत्।।

आघारं विधिवद्धुत्वा परिषिच्य च पावकम्।
चतुर्वेदादिघोषं च चतुर्दिक्षु विशेषतः।।

अब्जहोमं क्रमेणैव जुहुयात्तन्त्रवित्तमः।
पूर्वोक्तेन विधानेन ध्यायेद्देवं प्रणम्य च।।

पूर्वोक्तविधिना सम्यक् पञ्चमूर्तीः समर्चयेत्।
पायसादीनि पक्वानि यथार्हं तु निवेदयेत्।।

पानीयाचमनं दत्वा मुखवासं ददेत्पुनः।
परितस्सर्वदेवानां बलिं दत्वार्च्य सोदकम्।।

नृत्तैर्गेयैश्च वाद्यैश्च जयशब्दैश्च घोषयेत्।
तद्दिनोत्सवसङ्ख्या तु तत्तत्सङ्ख्या समर्चयेत्।।

प्रधानदेवपादे च कुर्यात्पुष्पाञ्जलिं भुवि।
जान्वन्तं च तथोर्वन्तं कट्यन्तं तु समर्चयेत्।।

नाभ्यन्तं तु स्तनान्तं वा बाह्वन्तमिति च क्रमात्।
ग्रीवान्तं तु ललाटान्तं मौल्यन्तमिति चार्चयेत्।।

तत्तत्पूजावसाने तु हविस्सम्यङ् निवेदयेत्।
हौत्रं च घोषणं चैव मूर्तीरावाहयेत् क्रमात्।।

होमं पूजाक्रमं चैव सर्वमन्त्रैस्ततः क्रमात्।
प्रतिष्ठोक्तक्रमेणैव सर्वं कृत्वा समाहितः।।

कार्यं विज्ञाप्य तत्काले विष्णुसूक्तं जपेत्क्रमात्।
अनुक्तं सर्वमूहित्वा चाचरेद्देशिकोत्तमः।।

### ७.१८.१४ उत्तमकल्पे पुष्पयागाचरणम्

**क्रि.१४.२०६ - २१६, २१९ - २२८**

प्रातरर्चावसाने तु अलङ्कृत्य यथार्हकम्।।

आस्थानमण्डपे देवं समानीयोदयात्परम्।
शुद्धस्नानोक्तमार्गेण स्नापयित्वा जनार्दनम्।।

नववस्त्रोत्तरीयाद्यैरलङ्कृत्य विभूषणैः।

महाहविः प्रभूतं वा समभ्यर्च्य निवेदयेत्।।

आस्थानमण्डपे वापि स्नपनालय एव वा।
चतुर्दिशं चतुर्हस्तं गोमयेनोपलिप्य च।।

पञ्चविंशत् पदं कृत्वा षट्सूत्रैः प्रागुदग्गतैः।
मध्ये नवपदे पद्मं साष्टपत्रं सकर्णिकम्।।

रत्नन्यासोक्तधान्यैर्वा तण्डुलैर्व्रीहिभिस्तिलैः।
बहिष्ठेषु पदेष्वग्रे वीशमेकत्र पूजयेत्।।

दक्षिणे चक्रमभ्यर्च्य पङ्क्तीशं पश्चिमे तथा।
उदीच्यां शान्तमभ्यर्च्य शेषेष्वर्कपदेषु च।।

आसनाद्यर्चनद्रव्यसञ्चयं च सुसन्न्यसेत्।
दलेष्वष्टसु पद्मस्य लोकपालान् समर्चयेत्।।

कर्णिकायां रवीन्द्वग्निमण्डलानि क्रमात् यजेत्।
विष्टरं तत्र संस्थाप्य तदन्तर्गतपङ्कजे।।

तत्र देवं प्रतिष्ठाप्य यावद्दिवसमुत्सवः।
तावत्कृत्वस्समभ्यर्च्य सप्तविंशतिविग्रहैः।।

नृत्तैर्गेयैश्च वाद्यैश्च चतुर्वेदस्तवैरपि।
तत्तत्पूजावसाने तु पृथक् पुष्पाञ्जलिं ददेत्।।

-----------------------------------

वैष्णवं विष्णुसूक्तं च सूक्तं पौरुषमेव च।
नारायणानुवाकं च सूक्तमेकाक्षरादिकम्।

'नारायणाय विद्मे'ति 'नमो ब्रह्मण'इत्यपि।।

पारमात्मिकसूक्तानि 'ऋतं सत्य'मिति ब्रुवन्।
द्वादशाष्टाक्षराभ्यां च तैरेव च पुनः पुनः।।

एवं पुष्पाञ्जलिं दद्यादाचार्यो मध्यतः स्थितः।
चतुर्दिक्षु क्रमेणैव स्थित्वा चत्वार ऋत्विजः।।

तत्तन्मन्त्रावसाने तु मूर्तिभिः पुरुषादिभिः।
पुष्पाञ्जलिं क्रमाद्दद्युः देवध्यानपरायणाः।।

पञ्चाग्नीन्परितः कृत्वा सभ्ये हौत्रं प्रशंस्य च।
तदालयगतान् देवान् आवाह्याज्यं निरुप्य च।।

तत्क्रमेणाहुतीर्हुत्वा विष्णुसूक्तं च वैष्णवम्।
सभ्ये हुत्वा विशेषेण ततश्चाहवनीयके।।

जुहुयात्पौरुषं सूक्तं विष्णुसूक्तं च दक्षिणे।
जुहुयाद् गार्हपत्याग्नौ गायत्रीं वैष्णवीं दश।।

आवसथ्ये तु जुहुयात् सूक्तमेकाक्षरादिकम्।
आज्येन समिधा तत्तद्धविर्भेदैश्च हूयताम्।।

एतदुत्तममुद्दिष्टं ------------------------।

**प्र.२५.२६७, २६९ - २८८**

## ७.१८.१५ मध्यमकल्पे पुष्पयागाचरणम्

**प्र.२५.२८८ - २९४**

------------- मध्यमं तु प्रवक्ष्यते।।

यथालाभप्रमाणेन पूर्वोक्तार्धेन वा हरेः।
पद्ममण्डलदेवानां कारयेत्प्रतिमादिकम्।।

तत्तद्दिनार्चनान्ते तु शुद्धान्नं वा निवेद्य च।
सर्वार्चान्ते पञ्चहविः दद्यादित्याह पूर्वजः।।

चतुर्वेदादिघोषं च चतुर्दिक्षु प्रकल्पयेत्।
अब्जहोमं क्रमेणैव जुहुयान्मन्त्रवित्तमः।।

पुष्पान्यासक्रमेणैव सर्वविद्येश्वरान्तकम्।
अभ्यर्च्य प्रथमं पश्चात् पुष्पयागोक्तपूजनम्।।

कृत्वा यथालाभहविः भक्ष्याणि विविधानि च।
निवेद्य मुखवासान्ते परिवारबलिं क्षिपेत्।।

इत्येवं मध्यमे प्रोक्तम् ---------------।

**क्रि.१४.२२८ - २३०**

----------------- मध्यमं तु प्रवक्ष्यते।
तत्तद्दिनार्चनान्ते तु शुद्धान्नं वा निवेद्य च।।

पुष्पाञ्जलिप्रदानानि सर्वाण्यन्यार्चने ददेत्।
सभ्य एकाग्निरेव स्यात् अन्यत्सर्वं च [1]पूर्ववत्।।

इत्येवं मध्यमं प्रोक्तम् ---------------------।

1. पूर्ववत् - उत्तमकल्पपुष्पयागक्रमोक्तवत्।

## ७.१८.१६ अधमकल्पे पुष्पयागाचरणम्

**क्रि.१४.२३० - २३२**

------------------ प्रवक्ष्याम्यधमं पुनः।
विना वीशादिभिर्देवैः होमैस्तत्पृथगर्चनैः।।

मण्डले देवमारोप्य पूजयित्वा यथाविधि।
हवींषि पञ्च चोक्तानि निवेद्य च ततः परम्।।

दद्यात् पुष्पाञ्जलिं मन्त्रैः समस्तदिवसोचितैः।

**प्र.२५.२९४ - २९६**

## ७.१८.१७ पुष्पयागान्तकृत्यम्

**प्र.२५.३०२, ३०३**

आचार्यः सुप्रसन्नात्मा सर्वाग्निषु यथाक्रमम्।
अन्तहोमं समाप्यैव देवदेवं प्रणम्य च।।

जीवस्थाने प्रतिष्ठाप्य देवेशं सम्यगर्चयेत्।

## ७.१८.१८ पुष्पयागान्ते भगवतो मन्दिरप्रदक्षिणम्

**वा.३३**

यात्रायाने समारोप्य स्वस्तिसूक्तं समुच्चरन्।
परीत्य मन्दिरं विष्णोरर्चास्थाने निवेश्य च।।

**वि.५४.३६१**

## ७.१८.१९ पुष्पयागे आचार्यादिदक्षिणा

### अ.२६

दशनिष्कं सुवर्णं तु आचार्याय प्रदापयेत्।
पूजकैरेव कर्ता च बलिं प्रक्षेपयेत्स्मृतिः।।
आचार्यस्य तदर्धं तु दक्षिणा च प्रदीयते।

### वा.३३

सुवर्णपशुभूम्यादि गुरवे दक्षिणां ददेत्।
राजा राष्ट्रस्थविप्रादि सर्वप्राणिहिताय वै।।

### वि.५४.३६२

[1]अथातो यजमानः श्रद्धया प्रधानाचार्यपूर्वं पञ्चपदार्थिभ्यः पञ्चपरिचारकेभ्यश्च यथोक्तदक्षिणां सोदकं देवसन्निधौ दद्यात्। ------------ अत्रोपयुक्तं सर्वमाचार्यायैव दद्यात्।

### प्र.२५.३००, ३०१, ३०३

दद्यादाचार्यपूर्वेभ्यो दक्षिणां विधिवत्ततः।
एकविंशितिनिष्कन्तु दद्यादाचार्यदक्षिणाम्।।

पदार्थिनां च सर्वेषां तदर्धं स्यात्पृथक्पृथक्।
गोभूमिभ्यां विशेषेण दत्वाऽऽचार्यं प्रसादयेत्।।

-----------------------------------------

ब्राह्मणान् भोजयेच्चैव प्रदद्याद्भूरिदक्षिणाम्।।

---

1. अथ - पुष्पयागानन्तरम्।

## ७.१८.२० वैष्णवादिपूजनम्

### वि.५४.३६२

वैष्णवान् सम्पूज्य, नर्तकान् गायकान् परिचारकान् (अन्यांश्च) यथार्हं पूजयेत् [1]।

## ७.१८.२१ पुष्पयागफलम्

### प्र.२५.३०५, ३०६

एवं यः कुरुते भक्त्या पुष्पयागं हरेः प्रियम्।
सर्वान् कामानवाप्यैव सर्वैश्वर्यमवाप्य च।।

सर्वान् शत्रून् विजित्यैव प्रजापशुसमन्वितः।
अन्ते विमानमारुह्य विष्णुसायुज्यमाप्नुयात्।।

### खि.३३.५०

### वि.५४.३६१

[1]एतेनाश्वमेधफलं प्राप्नोति। पुत्रकामः पुत्रान्, धनकामो धनानि, प्रतिष्ठाकामः प्रतिष्ठां, जयार्थी विजयं, श्रीकामः श्रियं च लभेत।

### वा.३३

सर्वपापं व्यपोह्यैव पुनर्जन्म न विद्यते।

---

1. यजमान इत्यनुवृत्तिः।

2. एतेन - पुष्पयागेन

### ७.१८.२२ पुष्पयागस्य उपदेशार्हाः अनर्हाश्च

**वि.५४.३६१**

एतं[1] नाशुश्रूषवे, नाभक्ताय, नासंमताय, नासच्छिष्याय, नासत्पुत्राय दद्यात्। सुभक्ताय सुशिष्याय सुसंयतायैव दद्यात् इत्याह मरीचिः।

★★★

1. एतं - पुष्पयागोपदेशम्

# १९.पुनर्वसूत्सवः

## ७.१९.१ पुनर्वसूत्सवः

### वा.४३

अत ऊर्ध्वं प्रवक्ष्यामि उत्सवं च पुनर्वसौ।
माघमासे च नक्षत्रे पूर्वपक्षे पुनर्वसौ।।

जयेति पूर्वमेवोक्तं तस्यां रामस्य धीमतः।
सीतालक्ष्मणसंयुक्तं सर्वालङ्कारसंयुतम्।।

यानमारोप्य तं ग्रामं कारयेत प्रदक्षिणम्।
देवालयं प्रविश्यैव स्नापयित्वा सहैव तम्।।

महाहविः प्रभूतं वा विधिनैव निवेदयेत्।
रामस्य लक्ष्मणस्यैव सीतायाश्च तथैव च।
उपचारान् विशेषेण कारयेदिति शासनम्।।

सीताया लक्ष्मणस्यापि पृथक् चेत् स्थापनं यदि।
हरिर्यदैव रामोऽभूत् श्रीश्च सीताऽभवत्तथा।।

पृथक् प्रतिष्ठा श्रीदेव्या यथापूर्वं तथैव च।
पृथक् सीताप्रतिष्ठायां तथा सर्वं समाचरेत्।।

तस्माद्रामस्य तस्यांशो लक्ष्मणोऽपि भवेत्तथा।
लक्ष्मणस्य प्रतिष्ठायां रामवत्सर्वमाचरेत्।।

मूर्तिमन्त्रो विशेषेण मन्त्रवत्सर्वमाचरेत्।

एष एव विशेषः स्यात् अन्यत् सर्वं समं भवेत्।।

वायोरंशः कपिर्मुख्यः हनुमानभवत्ततः।
हनूमतः प्रतिष्ठायां वायोरिव समाचरेत्।।

एवमेव क्रमेणैव पुनर्वसूत्सवमाचरेत्।
अपुत्रः पुत्रमाप्नोति सर्ववृद्धिकरं भवेत्।।

इष्टान् कामानवाप्नोति सायुज्यफलमश्नुते।

★★★

# २०.दमनारोपणोत्सवः

## ७.२०.१ दमनारोपणक्रमः

**वा.४२**

अत ऊर्ध्वं प्रवक्ष्यामि दमनारोपणक्रमम्।
द्वादश्यां चैत्रमासे च पौर्णमास्यामथापि वा।।

अङ्कुरानर्पयित्वैव पूर्वोक्तेन विधानतः।
तोरणादिस्त्वलङ्कारः [1]पूर्ववत्स्याद्यथाविधि।।

उद्यानादींश्च गत्वा तु चक्रं गरुडसंयुतम्।
वनस्य देवतास्सर्वा बलिं दत्वाऽर्च्य सोदकम्।।

वसन्तं तत्र चावाह्य चार्चयित्वाष्टविग्रहैः।
विष्णुसूक्तं समुच्चार्य दमनं सम्प्रगृह्य च।।

सुवर्णं रजतं वाथ ताम्रं वा कांस्यमेव वा।
तत्पात्रे निधायाचार्यशिष्यशिरसि धारयेत्।।

ग्रामप्रदक्षिणं कुर्यात् आलयान्तः प्रवेशयेत्।
समूलं दमनं ग्राह्यं मन्मथाय नमोऽस्त्विति।।

---

1. पूर्ववत् - पवित्रोत्सवे यागशालाविषये उक्तवदित्यर्थः

'तद्विष्णोरिति' मन्त्रेण दमनं रोपयेद्धरिम्।

इदं संक्षेपतः प्रोक्तं दमनारोपणं विदुः।
विस्तरेण न चैवोक्तं ग्रन्थगौरवभीरुणा।।

★★★

## २१. वसन्तोत्सवः

### ७.२१.१ वसन्तोत्सवकालः

**वा.३४**

[1]अतः परं प्रवक्ष्यामि वसन्तस्योत्सवं शृणु।
वसन्तकाले सम्प्राप्ते मदनप्रियकाम्यया।।
देवदेवं समभ्यर्च्य विधिनैवोत्सवं चरेत्।
मकराद्यास्तु षण्मासाः वसन्त इति चोच्यते।।
तथा तत्र विशेषेण फाल्गुनादित्रयं विदुः।
इष्टमासस्तु सङ्ग्राह्यः विष्णोरर्चनमारभेत्।।
त्रिमासेषूत्तमं चेति मध्यमं च द्विमासतः।
अधमं चैकमासं तु इति शास्त्रस्य निश्चयः।।
उत्तमं मासमेकं स्यात् तदर्धं मध्यमं भवेत्।
तदर्धमधमं प्रोक्तम् इति केचिद्वदन्ति वै।।

### ७.२१.२ वसन्तोत्सवे भगवदाराधनम्

**वा.३४**

एकादिमासपर्यन्तं दिने सङ्कल्प्य धीमतः।

---

1. सौम्योत्सवकरणानन्तरम्।

यत्र यत्र दिनं ग्राह्यं तस्य पूर्वेऽङ्कुरार्पणम्।।

उत्सवादिदिनात्पूर्व रात्रौ प्रतिसरं कुरु।
ततः प्रभाते धर्मात्मा यजमानयुतो गुरुः।।

स्नात्वा स्नानविधानेन प्रविशेदालयं शनैः।
देवदेवं प्रबोध्यैव प्रणम्यैवानुमान्य च।।

भक्तैः परिवृतो गच्छेत् वेदध्वनिसमाकुलैः।
आस्थाने स्थापयेद्देवं कूटं वापि प्रपामपि।।

चन्दनं चम्पकं चैव नारिकेलाम्रमेव च।
पुन्नागं च तथा पूगं कदली चान्यवृक्षकैः।।

एवमादीनि चाहृत्य मण्डनैर्युक्तितः क्रमात्।
पुष्पदामादि चाश्वत्थपल्लवैरपि भूषयेत्।।

दर्भमालापरिवृतैः ध्वजादिभिरलङ्कृतैः।
तालवृन्तैस्तथान्यैश्च व्यजनैर्वीजयेत्क्रमात्।।

एलालवङ्गकर्पूरचन्दनोशीरमेव च।
जम्बूजातीफलादीनि कुङ्कुमैश्च विशेषतः।।

चषकैः पूरयेत्तोयं एलागन्धांश्च निक्षिपेत्।
नवकुम्भैस्समादाय कल्हारमुखशीतलैः।।

पुरतोऽभ्युक्ष्य तत्तोयं पार्श्वयोरपरे तथा।
सर्वैः पुष्पैर्विकीर्यैव जलेन सहितं शनैः।।

देवदेवं प्रणम्यैव पाद्याद्यर्घ्यान्तमर्चयेत्।
कदली पनसं चैव नारिकेलं च मञ्जुका।।

दाडिमं च तथा चूतं फलं तस्य निवेदयेत्।
पृथुकैर्गुलसंयुक्तैरपूपं च निवेदयेत्।।

पानीयाचमनं दत्वा मुखवासं ददेत्पुनः।
आचार्यो देवमादाय देवीयुक्तं तथा पुनः।।

भक्तैः परिवृतो गच्छेत् वेदैः स्तोत्रैश्च घोषयेत्।
स्नानासने समारोप्य यथोक्तस्नानमाचरेत्।।

अलङ्कारासनं प्राप्य चालङ्कृत्यार्चयेत् प्रभुम्।
भोज्यासने समारोप्य प्रभूतं च निवेदयेत्।।

अमूर्तार्चनमाविश्य देवदेवमनुस्मरन्।
यद्यद्द्रव्यं निवेद्यैव तत्तद्द्रव्यं समाहरेत्।।

आज्यमिश्रेण तत्सर्वं मूर्तिमन्त्रेण हूयताम्।
'अतो देवा'दिमन्त्रेण समिदाज्येन हूयताम्।।

क्रमादग्निं विसृज्यैव देवपार्श्वं व्रजेत्सुधीः।
मधुपर्कं च संन्दद्यात् पानीयाचमनं ददेत्।।

ताम्बूलं च निवेद्यैव भक्तानां च प्रदापयेत्।
आचार्यदक्षिणां दत्वा ब्राह्मणादींश्च भोजयेत्।।

देवदेवं प्रणम्यैव याने चारोपयेत्प्रभुम्।

वेदैः स्तोत्रैश्च वाद्यैश्च घोषयित्वा प्रदक्षिणम्।।

वसन्तान्तदिने चैव दोलामारोपयेत्सुधीः।
पुनरन्तः प्रविश्यैव नित्यपूजां समाचरेत्।।

एवमेव विधानेन दिनं प्रति समाचरेत्।

तदन्ते स्नपनं चैव यजमानः स्वशक्तितः।।

## ७.२१.३ वसन्तोत्सवफलम्

**वा.३४**

एवं यः कुरुते भक्त्या वसन्तोत्सवमादरात्।
सर्वान् कामानवाप्यैव विष्णोस्सायुज्यमाप्नुयात्।।

★★★

# २२. दोलोत्सवः

## ७.२२.१ दोलोत्सवकालः

**वा.३४**

अतः परं प्रवक्ष्यामि डोलाविधिमनुत्तमम्।
देवादीनां कृतं चैव अप्सराणां तथैव च।।

देवीभ्यां च विशेषेण प्रियं महति वर्तते।
तस्मात्सर्वप्रयत्नेन दोलार्चनमथाचरेत्।।

[1]वसन्तस्योत्सवे कुर्यात् वृश्चिके चैव कृत्तिके।
अन्येषामुत्सवे चापि दोलारोपणमाचरेत्।।

## ७.२२.२ दोलाया निर्माणम्

**वा.३४**

खादिरैरर्जुनैश्चैव वृक्षैस्सारं प्रगृह्य च।
शैलजैर्लोहजैर्वापि रत्नैश्चापि विशेषतः।।
विमाननासिकान्तं च कर्णान्तं वा विशेषतः।
प्रस्तरान्तमिति ख्यातं ऋजुं सुषिरवर्जितम्।।

---

1. वसन्तोत्सवस्यान्तिमदिने दोलोत्सवः कार्य इति वसन्तोत्सवप्रयोगंकथनावसरे कथितमिति तत्र द्रष्टव्यम्

तालद्वन्द्वं तदग्रे च मुकुलं कारयेद्बुधः।
तदधस्ताद्द्वये रेखां कर्णं कृत्वा विचक्षणः।।

कण्ठाधस्ताच्चतुस्तालमग्रनाहं विधीयते।
तन्मध्ये पञ्चतालं स्यात् मूले षट्तालमुच्यते।।

द्वितीयावरणे चैव तृतीयावरणे तथा।
आलयस्योत्तरे पार्श्वे दक्षिणे वा मनोरमे।।

शुभर्क्षे शुभलग्ने च स्थापनारम्भमाचरेत्।
द्वौ स्तम्भौ स्थापयेत्तत्र दक्षिणोत्तरतः क्रमात्।।

ध्रुवसूक्तं जपित्वा तु दृढीकरणमाचरेत्।
स्तम्भान्तरं चतुर्हस्तं पञ्चहस्तमथापि वा।।

तत्समं पट्टिकायाममूर्ध्वपट्टीं च तत्समम्।
मुकुलाधोद्वियङ्गुल्यमूर्ध्वपट्टीं च कारयेत्।।

तदधस्ताद् द्वियङ्गुल्यं पद्मपट्टीं च योजयेत्।
वलयद्वयसंयुक्तं प्रादेशात्पट्टिकान्तरम्।।

पट्टिकायाश्च विस्तारं तालं तालार्धमेव वा।
अलङ्कारादिसर्वं च शिल्पिभिः कारयेत्क्रमात्।।

### ७.२२.३ दोलाया अर्चनम्

**वा.३४**

धर्मं ज्ञानं द्वयोः स्तम्भौ पट्टिका रविसोमयोः।
आयसैः रज्जुभिः कृत्वा तथान्यैर्वापि कारयेत्।।

चतुर्वेदमयीं रज्जुं चतुष्कोणेषु योजयेत्।

दोलां कृत्वा यथायोग्यं देवपीठस्य चार्हतः।।

महीं च द्विकतालेन वर्जयेल्लम्बयेद्बुधः।
दोलायाश्चाधिपो ब्रह्मा वलयौ चाश्विनौ मतौ।।

इन्द्रादिलोकपालांस्तु तत्तद्देशे समर्चयेत्।
जयादींश्चाप्सरादीनामर्चयित्वा बलिं क्षिपेत्।।

मण्डनं वस्त्रमाल्यैश्च नानावर्णसमायुतम्।
तद्दिनात्पूर्वरात्रौ च विधिनैवाङ्कुरार्पणम्।।

तद्दिनात्पूर्वरात्रौ च स्नपनं चाधमोत्तमम्।
नववस्त्रोत्तरीयाद्यैः भूषणैरपि भूषयेत्।।

पूर्वोक्तविधिनाऽऽस्तीर्य शयनानि यथातथा।
शयने देवमारोप्य पूजयित्वा निवेदयेत्।।

ततः प्रतिसरं बद्ध्वा देवं देव्यौ सहैव च।
शाययित्वा विधानेन रक्षां तत्रैव कारयेत्।।

औपासनाग्निं संस्थाप्य दोलापूर्वेऽथवोत्तरे।
आघारं विधिवत्कृत्वा शान्तिं कृत्वा विशेषतः।।

वैष्णवं विष्णुसूक्तं च श्रीसूक्तं च यजेत्क्रमात्।
'नारायणाय विद्म'ेति शतमष्टाधिकं यजेत्।।

तन्मन्त्रेश्च तं हुत्वा स्तम्भाद्याद्यथवा न्यसेत्।
पयोदधिघृतैर्युक्तैः हुत्वा लाजैश्च वैष्णवम्।।

नृत्तैर्गेयैश्च वाद्यैश्च रात्रिशेषं नयेत्तथा।

## ७.२२.४ दोलोत्सवाचरणप्रयोगः

### वा.३४

प्रभाते समनुप्राप्ते यजमानयुतो गुरुः।।

स्नात्वा सन्ध्यामुपास्यैव देवेशस्योत्सवं व्रजेत्।
प्रदक्षिणनमस्कारांस्तत्र तत्रैव कारयेत्।।

किञ्चित्तरङ्गमुद्धृत्य देवमुद्वीक्ष्य चासनम्।
सम्बोध्य देवदेवेशं पुष्पाञ्जलिमथाचरेत्।।

विमोच्य वस्त्रमाल्यादीन् पुनरन्यैश्च भूषयेत्।
पाद्याद्यर्घ्यान्तमभ्यर्च्य अपूपादीन्निवेदयेत्।।

पश्चाद्देवं समानीय यानमारोप्य चादरात्।
पुष्पैर्गन्धैश्च धूपैश्च दीपैरङ्कुरसंयुतैः।।

नयेद् दोलासमीपे तु देवं देव्यौ सहैव च।
पुष्पवृष्टिसमायुक्तैः वेदध्वनिसमायुतैः।।

नृत्तैर्गेयसमायुक्तैः नानावाद्यसमायुतैः।
आस्फोटजयशब्दैश्च तोयधारासमायुतम्।।

छत्रैः पिञ्छैश्च मायूरैः चामरैस्तालवृन्तकैः।
दोलासमीपे गत्वा तु चार्चयेत्तदनुक्रमात्।।

पुण्याहं वाचयेत्तत्र द्विजेभ्यो दानमाचरेत्।
दोलामारोप्य देवेशं विष्णुसूक्तेन वैष्णवम्।।

श्रीसूक्तं च जपित्वैव दक्षिणोत्तरतः क्रमात्।।
देव्यौ चैव समारोप्य रक्षां तत्रैव कारयेत्।

वायुमन्त्रेण देवेशमानयेत शनैश्शनैः।।
अभ्यर्च्य गन्धपुष्पाद्यैरर्चयेत विशेषतः।

अपूपादीनि भक्ष्याणि देवेशाय निवेदयेत्।।
पानीयाचमनं दत्वा मुखवासं ददेत्पुनः।

पश्चाद्देवं समानीय चास्थाने स्थापयेद्गुरुः।
पुष्पाञ्जलिं च बहुशो देवदेवस्य पादयोः।।

आचार्यो यजमानश्च देवमानीय चादरात्।
प्राणस्थाने प्रतिष्ठाप्य ह्यर्चयित्वा विशेषतः।।

आचार्यो यजमानश्च देवेशमनुमान्य च।
देवेशं श्रीमहीयुक्तं महाभागवतैर्युतम्।।

अत्यन्तशान्तिको देवः पूजां संप्रतिगृह्यताम्।
इत्यनुज्ञाप्य देवेशं प्रार्थयेत पुनः पुनः।।

आचार्यदक्षिणां दत्वा ब्राह्मणानपि भोजयेत्।

### ७.२२.५ दोलारोपणफलम्

**वा.३४**

एवं कृत्वा विधानेन दोलारोपणमादरात्।।

सप्तजन्मकृतं पापं तदहन्येव नश्यति।
इहलोके सुखं भुक्त्वा चान्ते सायुज्यमाप्नुयात्।।

★★★

## २३. महालक्ष्म्युत्सवः

### ७.२३.१ महालक्ष्म्यर्चनफलम्

**क्रि.**[1]

अथ भाद्रपदे मासि गुह्याद्गुह्यतमं भवेत्।
महालक्ष्म्याः प्रियकरमर्चनं संप्रवक्ष्यते।।

इन्द्राद्या बहवो देवा गन्धर्वाप्सरसो गणाः।
सिद्धविद्याधराश्चैव राजानो बहवस्तथा।।

एतत्कृत्वार्चनं दिव्यं महालक्ष्म्याः प्रसादतः।
दीर्घायुष्यं जयं चैव वाञ्छितार्थमवाप्य च।।

प्राप्तवन्तश्च ते कीर्तिमचलां च श्रियं सुखम्।
तस्मात्तस्यार्चनं कुर्यात्समृद्धिं स्वस्य संपदाम्।।

य इच्छति नरो लोके शुक्ले च प्रतिपत्तिथौ।
नभस्येव समारभ्य यावच्च नवमी भवेत्।।

तावल्लक्ष्म्यर्चनं कुर्यादारब्धोत्तरफल्गुनीम्।
एकादशदिनं वाथ पौर्णमास्यान्तमेव च।।

उत्सवं तु नवाहं वा कारयेत्सर्वसंपदे।

---

1. S.V.O.R.I - Pl - Mss. 2369

### ७.२३.२ महालक्ष्म्युत्सवस्य दिनसंख्यानुरोधेन त्रैविध्यम्

**अ.३१**

श्रीमहालक्ष्म्युत्सवं वक्ष्ये लक्ष्मीपूजाविधानतः।
सर्वैश्वर्यप्रदं नित्यं सर्वाभीष्टफलप्रदम्।।

प्रथमादिनवम्यन्तमुत्सवं चोत्तमं भवेत्।
सप्ताहं मध्यमं चैव पञ्चाहमधमं भवेत्।।

### ७.२३.३ महालक्ष्म्युत्सवस्य दिनसंख्यानुरोधेन देवताप्रियत्वम्

**अ.३१**

एकाहं ब्रह्मणः प्रीतिः त्रियहं शङ्करप्रियम्।
लक्ष्मीप्रीतिश्च सप्ताहं मम प्रीतिर्नवाहकम्।।

### ७.२३.४ महालक्ष्मीसमाराधनप्रयोगः

**क्रि.**

लक्ष्म्यालयमलङ्कृत्य वितानाद्यैर्मनोहरम्।।

प्रपामब्जाग्निकुण्डे तां पूजामण्डपसंयुताम्।

मध्यवेदीयुतां कृत्वा फलपुष्पाद्यलङ्कृताम्।
यजमानस्तु शुद्धात्मा नित्यकर्मक्रियादिना।।

आचार्यमृत्विजो वृत्वा प्रार्थितान् पूज्य शक्तितः।
कारयेदङ्कुरं पूर्वं संभारानर्चनार्थकान्।।

समाहृत्य च पूर्वेद्युः पञ्चनिष्कसुवर्णतः।
लक्ष्मीं चतुर्भुजां देवीं पद्मासनसमन्विताम्।।

ऊर्ध्वहस्तद्वयेनैव पद्मं चोभयमन्यतः।
वरदं चाभयं कुर्यात्तदर्धेन सुवर्णतः।।

दुर्गां च धिषणां ज्येष्ठां प्रदक्षिणवशाद् रमाम्।
किरीटमकुटोपेतां द्विभुजां मञ्जरीयुताम्।।

सर्वभद्रां जयां चैव कृत्वाऽऽसीनां सलक्षणाम्।
शालिधान्यैः समास्तीर्य वस्त्रैराच्छाद्य सर्वतः।।

द्रोणैर्गोधूमधान्यैश्च साष्टपत्रं सकर्णिकम्।
कृत्वात्र राजते पात्रे गन्धमध्ये तु विन्यसेत्।।

देव्यास्तु परितः पीठे सहस्ते तु सगन्धके।
दुर्गां दक्षिणातः स्थाप्य सर्वभद्रां तु पूर्वतः।।

जयामुत्तरतः स्थाप्य श्रीसूक्तेनार्चयेच्छ्रियम्।
संस्नाप्य कलशैर्देवं पश्चिमे स्थाप्य विष्टरे।।

वस्त्राद्यैरप्यलङ्कृत्य मुद्गान्नं संनिवेद्य च।
दुर्गाद्याश्च समभ्यर्च्य पायसं कृसरं गुलम्।।

मिश्रं दध्योदनं चैव शुद्धान्नं च घृतोदनम्।
क्रमान्निवेद्य विधिवदब्जाग्निं परिषिच्य च।।

श्रियं देवीं समभ्यर्च्य श्वेतपद्मैर्विशेषतः।

श्रियः शताष्टकैर्मन्त्रैः श्रीसूक्तेनाष्टपर्ययैः।।

'शंसानियच्छ' इति च 'भूयाम' इति च ब्रुवन्।
देव्याः प्रतिसरं बध्वा श्रीसूक्ताध्ययनं द्विजैः।।

श्रीदेव्याः स्तोत्रमन्त्रैश्च गायत्र्या च तदाख्यया।
वेदपारायणं चैव कारयेद्दिक्षु सर्वतः।।

समिद्भिर्बिल्ववृक्षोत्थैः पायसैः पद्मपुष्पकैः।
बिल्वपत्रैः क्रमाद्धोमं कापिलेन घृतेन च।।

श्रियः शताष्टकैर्मन्त्रैर्दशवारं च हूयताम्।
श्रीसूक्तेन श्रियो मूर्त्या मन्त्रैर्गायत्रिया पुनः।।

वैष्णवैश्च चतुष्कृत्वा दुर्गादिमनुभिः क्रमात्।
मूर्तिमन्त्रैश्च हविषा घृतेन जुहुयात्क्रमात्।।

श्रीसूक्तं च चतुर्वारं पायसैः कपिलैर्घृतैः।
लक्ष्मीपतेर्महामन्त्रैर्मध्याह्ने चार्चयेत् क्रमात्।।

पायसं मधुसर्पिभ्यां फलैर्भक्ष्यैः समन्वितम्।
निवेद्य मुखवासं च देवेशस्य विशेषतः।।

हविः पञ्चविधं दत्त्वा प्रभूतं च निवेदयेत्।
षोडश द्वादशाष्टौ वा स्त्रियो विप्रांश्च भोजयेत्।।

सोपस्करांस्तण्डुलान्वा विप्रकेभ्यः सवाससः।
दत्वा पादाग्रमारभ्य श्रियं मौल्यन्तमर्चयेत्।।

पादाग्रे गुल्फयोर्जान्वो ----- खा कटिस्तथा।
नाभौ च ऊरुजङ्घोश्च बाह्वोश्च मुखमण्डले।।(?)

ललाटे मकुटे चैव देव्या मूर्तिभिरर्चयेत्।
पद्मालयामिन्दिरां च चञ्चलां हरिवल्लभाम्।।

श्रियं क्षीराब्धितनयां पद्मां त्रैलोक्यमातरम्।
रमां धृतिं पवित्रीं च स्वर्णवर्णां तथेष्टदाम्।।

प्रमोददायिनीमेतैश्चतुर्थ्यन्तैः समर्चयेत्।
विष्णुनामसहस्रेण समर्च्य तुलसीदलैः।।

लक्ष्मीं विष्णुं महीं चापि वस्त्रमाल्यैश्च भूषणैः।
अलङ्कृत्य समारोप्य हंसयाने तु वैष्णवैः।।

आस्थाने पूज्य विधिवत् फलापूपैर्निवेद्य च।
कारयित्वोत्सवं ग्रामे आलये विष्णुना श्रियम्।।

संस्थाप्य जीवस्थाने तु नित्यपूजां समाचरेत्।
एवं प्रतिदिनं कुर्याद्दिने पूर्वेभ्य पर्षदाम्।।(?)

श्रियं मूलश्रियो बिम्बे उद्वास्यार्चनकर्मसु।
प्रायश्चित्तं च हुत्वा तु सर्वकर्म समापयेत्।।

यजमानोऽथ तत्काले श्रीरूपं च सदक्षिणम्।
आचार्याय ददेद्भक्त्या संपूर्णं कर्म तद्भवेत्।।

सदक्षिणानि यज्ञानि फलवन्त्यब्रुवन् बुधाः।

अ. ३१

मुहूर्ते च सुलग्ने च सुदिने च यथाक्रमम्।
महातटाके नद्यादौ संभवान् गणयेद्द्विजः।।

स्नापयित्वा तुरङ्गाद्यैः सेवाजनवरैः सह।
समस्तविभवैश्चैव च्छत्रचामरसंयुतः।।

पताकैर्गणिकाभिश्च ग्रामं नीत्वा प्रदक्षिणम्।
आलयं संप्रविश्याथ तुरगं च समर्चयेत्।।

'अश्वोऽसी'ति च मन्त्रेण अर्चयित्वा विधानतः।
दिनेदिने विशेषेण स्नपनं सम्यगाचरेत्।।

नित्यहोमविधानेन श्रीभूसूक्तं यजेद्बुधः।
लक्ष्म्यादितुरगादीनां नववस्त्रेण वेष्टयेत्।।

पूर्वोक्तेन विधानेन अश्वादीनर्चयेत्क्रमात्।
मण्टपं सलक्षणं कृत्वा वितानैश्चित्रवर्णकैः।।

नानापुष्पसमायुक्तं नानाफलसमन्वितम्।
लक्ष्मीसंतोषणार्थाय लक्ष्मीमण्टपमाविशेत्।।

सिंहासने समारोप्य देवं देव्योः सहैव तम्।
राजयोग्योपचारेण भक्ष्यभोज्यान्यनेकशः।।

मुद्गान्नं पायसान्नं च तिलान्नं च गुलान्नकम्।
पृथुकादि निवेद्यैव ताम्बूलं मुखवासकम्।।

दिनेदिने विशेषेण नवम्यां तु समाचरेत्।
भक्तैर्भागवतैश्चैव प्रसादात् स्थापयेत्ततः।।

सायंकाले तु संप्राप्ते देवदेवं प्रणम्य च।
ग्रामप्रदक्षिणं कृत्वा सविलासैः शनैःशनैः।।

नृत्तगीतसमायुक्तं नाटकैश्च समन्वितम्।
सर्ववाद्यसमायुक्तं पुष्पवृष्टि समन्वितम्।।

मुष्टिदीपैर्महादीपैः श्रेणिदीपैः समन्वितम्।
लक्ष्मीसंतोषणार्थाय विप्रदक्षिणमाचरेत्।।

लक्ष्मीगेहे प्रवेश्यैव उपचारैस्तु सर्वशः।
दशमीदिवसे प्राप्ते यथोक्तैव विधानतः।।

स्नपनाद्देवमभ्यर्च्य नित्यहोमपुरस्सरम्।
प्रायश्चित्तं ततो हुत्वा विधिना बलिमाचरेत्।।

तुरङ्गं समलंकृत्य दृढीकृत्य च यत्नतः।
देवमारोपयेत्तत्र सर्ववाद्याग्रतो न्यसेत्।।

वनेवने विलासार्थं शमीवृक्षस्य संनिधौ।
शीघ्रं प्रदक्षिणं कृत्वा महारङ्गेशमादिशेत्।।

समभ्यर्च्य निवेद्यैव आयुधानि च सर्वशः।
सुदर्शनेति मन्त्रेण अर्चयेदष्टविग्रहैः।।

शमीमन्त्रेण पत्रेण सर्वं शिरसि धारयेत्।

आचार्यो भूपतिर्वाथ देवदेवं प्रणम्य च।।

पुष्पगन्धादिभिरभ्यर्च्य धनुर्बाणं च धारयेत्।

चतुर्दिशवशार्थाय चतुर्दिक्षु मुखं तथा।।

सर्वारिष्टविनाशाय चतुर्बाणं तु योजयेत्।

सायंकाले तु संप्राप्ते नानादीपसमन्वितः।।

ग्रामं प्रदक्षिणं कृत्वा तुरगं तु विसर्जयेत्।

### ७.२३.५ महालक्ष्म्युत्सवफलम्

**क्रि.**

एवं यः कुरुते भक्त्या लक्ष्म्याः सविभवार्चनम्।।

अचलां श्रियमाप्नोति जन्मजन्मान्तरेऽपि च।

तद्वंशजाश्च श्रीमन्तो भविष्यन्ति न संशयः।।

**अ.३१**

एवं यः कुरुते भक्त्या सर्वान् कामानवाप्नुयात्।।

